पुरुषार्थत्वम् । न० पुरुषोद्देश्यप्रत्यक्ष फलसाधकत्वे ॥ भावेत्व : ॥

पुरुषार्थसाधनम् । न० चतुर्वर्गोपाये । तेचस्मृतिप्रसिद्धा : । यथा अर्थस्य मूलंनिकृतिः चमाचकामस्यरूपञ्च वयोवपुश्च । धर्मस्ययागादिदयादम श्चमोचस्यसर्वोपरम : क्रियाभ्य : ॥ तत्रउत्कृष्टपुरुषार्थलाभेसम्भवत्यध मंकामक्षमाक्षोमूर्खएव ॥

पुरुषास्थिमाली । पुं० शिवे ॥ पुरुषा स्थ्नांमाला०साचस्तिअस्य । व्रीह्या दित्वादिनि : ॥

पुरुषोत्तम : । पुं० विष्णौ । भगवति । वासुदेवे ॥ पुरुषेभ्य : पुरुषेषुवा उत्तम : । ननिर्द्धारणद्वतिषष्ठीसमा सनिषेधात् । पुरुषाणांमध्येउत्तमो वा । ननिर्द्धारणद्वति निषेधस्तुजा त्याद्यनपेक्षयाऽसमर्थत्वान्नप्रवर्त्त ते । अंधारयेतु सत्महत्परमोत्तमो त्कृष्टा : पूज्यमानैरित्युत्तमपुरुष द्वतिस्यात् ॥ यस्मात्क्षरमतीतो हमक्षरादपिचोत्तमः । अतोस्मि लोकेवेदेचप्रथित : पुरुषोत्तम : ॥ नृपवि० । तत्ताईवित्रेषे ॥

पुरुसत्तम : । पुं० श्रीहरौ ॥ पुरुर्विश्व रूपश्चासौसत्तमश्च ॥

पुरुस्पृह : । त्रि० बहुभि:स्पृहणीये ॥

पुरुह : । त्रि० प्रचुरे ॥ पुरून्हन्तिग च्छति । हन० । अन्येभ्योपीतिड: ॥ यद्वा । पुरून्जहाति० जिहीते आत्वातद्वतिक : ॥

पुरुहूत : । पुं० इन्द्रे ॥ पुरुप्रचुरंहूतं माह्वानंयज्ञेष्वस्य । पुरूणिहूतानि नामान्यस्य । युद्धेपुरुनाम्नाऽसुरेण हूतद्वतिवा । ह्वेञ : क्त : । सम् प्रसारणम् । हलइतिदीर्घ : ॥ पुरुभूयिष्टं यथास्यात्तथायज्ञेषुनिहूँ यतद्वतिवा ॥

पुरुहूता । स्त्री० देवीविशेषे ॥ पुरुहूता पुष्करात्ते० द्वतिभागवतोक्ते : ॥

पुरूरवा : । पुं० बुधस्यपुत्रे । उर्वशीर मणे । ऐले । बौधे । चन्द्रवंशीया दिराजे । राजर्षौ ॥ विश्वेदेवे ॥ पार्वणश्राद्धदेवे ॥ यथा । पुरूरवा माद्रवाश्चपार्वणेसमुदाहृतौ ॥ पुरु रौति । रुशब्दे । पुरूरवाइति० पुरुशब्दस्यदीर्घोरौतेरसिश्चनिपात्यते

पुरोग : । त्रि० अग्रगे । अग्रसरे ॥ पुरोगच्छति । गम्लृ० । अन्येभ्यो पीतिड : ॥ प्रधाने ॥

पुरोगति : । पुं० कुक्कुरे ॥ त्रि० अग्र गे ॥

पुरोगम : । त्रि० अग्रगे । पुर: सरे ॥ पुरोगच्छति । गम्लृ० । अच्० खु श्वा ॥

पुरोगामी । त्रि० पुरोगे । अग्रसरे । प्रष्ठे ॥ पुरोगन्तुंशीलमस्य । सुप्य- जातावितिणिनि: ॥

पुरोटिः। पुं० पत्रभङ्गकारे। रायभाटिइ० गौ० भा० ॥ पुरोटिःपुरसंस्कारेइतिहारावली ॥

पुरोडाशः। पुं० हविर्भेदे। यवचूर्णनिर्मितरोटिकाविशेषे ॥ पिष्टकस्यचमस्याम् ॥ हुतशेषे ॥ सोमरसे ॥ पुरोदाश्यते। दाशृदाने। कर्म्मणिघञ्। पौरोडाशपुरोडाशेत्यत्र निपातनाद्दस्यडत्वम् ॥

पुरोडाश्यम्। त्रि० पुरोडाशीये। हविर्योग्ये ॥

पुरोद्भवा। स्त्री० महामेदायाम् ॥

पुरोधाः। पुं० पुरोहिते ॥ पुरोऽग्रे धीयते। डुधाञ्०। पुरसिचेति० धाञोऽसिः ॥

पुरोभागी। त्रि० दोषैकदृशि। दोषमात्रदर्शिनि ॥ पुरः पूर्वं भजते। भज०। घिनुण् ॥ दोषैकदृक्पुरोभागीतुकथ्यते ॥ अग्रांशिनि ॥

पुरोहितः। पुं० शान्त्यादिकर्त्तरि। पुरोवसि ॥ पुरोदृष्टादृष्टफलेषुकर्मसु धीयते आरोप्यते यः। डुधाञ्०। क्तः। दधातेर्हिः ॥ त्रय्यांचदण्डनीत्यांच कुशलःस्यात् पुरोहितः। अथर्वविहितंकुर्यान्नित्यंशान्तिकपौष्टिकम् ॥ लक्षणान्तरंचयथा। वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः। आशीर्वादवचोयुक्तएषराज पुरोहित इति ॥ वर्जनीयस्तुयथा। कार्याव्यङ्गमपुत्रंवाऽनभिज्ञमजितेन्द्रियम्। नङ्गस्वंव्याधितंवापिनृपःकुर्यात्पुरोहितमिति ॥

पुर्य्यष्टम्। न० पुर्य्यष्टके ॥

पुर्य्यष्टकम्। न० ज्ञानेन्द्रियाद्यष्टके ॥ यथा। ज्ञानेन्द्रियाणिपञ्चैवपञ्चकर्मेन्द्रियाणिच। मनोबुद्धिरहङ्कारश्चित्तञ्चेतिचतुष्टयम् ॥ प्राणोपानस्तथाव्यानउदानाख्यस्तथैवच। समानश्चेतिपञ्चैताःकीर्त्तिताःप्राणवृत्तयः ॥ खंवायुर्ज्योतिरप्याश्चभूतसूक्ष्माणिपञ्चच। अविद्याकामकर्माणिलिङ्गंपुर्य्यष्टकंविदुरिति। अन्यच्च। भूतेन्द्रियमनोबुद्धि वासनाकर्मवायवः। अविद्याचाष्टकंप्रोक्तं पुर्यष्टमृषिसत्तमैः ॥ अपिच। ज्ञानेन्द्रियाणिखलुपञ्च तथापराणि कर्मेन्द्रियाणि मनआदिचतुष्टयञ्च। प्राणादिपञ्चकमथो वियदादिपञ्चकामश्चकर्मचतमः पुनरष्टधापूः ॥ पुरीणामष्टकम् ॥

पुलः। पुं० पुलके ॥ त्रि० विपुले ॥

पुलकः। पुं० कृमिभेदे ॥ प्रस्तरविशेषे ॥ तस्यपरीक्षान्यत्रद्रष्टव्या ॥ मणिदोषे ॥ रोमाञ्चे। त्वक्पुष्पे ॥ हरितालि ॥ गजान्नपिण्डे ॥ गन्धर्वे ॥ गल्वर्के० इतिहेमचन्द्रेपाठः ॥ असुराज्याम्इतिहेमचन्द्रः ॥ न० पर्वती

यस्तित्वकादि० । कटुक ॥

पुलकित : । त्रि० हर्षिते ॥ पुलक : सञ्जातोऽस्य । ता० इतच् ॥

पुलकी । पुं० धाराकदम्बे ॥

पुलस्थि : । पुं० देशविशेषे ॥ शिलह ट्टात्पूर्वभागे कामरूपात्तयोत्तरे । पुलस्थिदेशो देवेशि नरनारायणः परः ॥

पुलस्ति : । पुं० पुलस्त्यमुनौ ॥

पुलस्त्य : । पुं० ब्रह्मणः कर्णाभ्यांजाते सप्तर्षीणांमध्ये ऋषिविशेषे । हविर्भुवः पत्यौ ॥

पुलह : । पुं० ब्रह्मणोनाभितोजाते सप्तर्षीणांमध्ये ऋषिविशेषे । गतिस्वामिनि ॥ स्वायम्भुवमनोस्तनये ॥

पुलहाश्रम : । पुं० हरिःक्षेत्रे ॥

पुला । स्त्री० मृताद्यनेकापरनामनि हयगतिवि० ॥ तदुक्तंहयलीलावत्याम् । मृतान्नवञ्चिता माधुर्यधारा पुलनाभिधा । पुनरेनांनलीशाल्लां पुलामित्याहदेशिकाः ॥ तत्रत्वश्रुत चैव । त्रियतिसमविशेषानुत्क्षिप त्यग्रपादान्प्रसरतिपुरतोश्व : साथधारापुलाख्या । विलसतिसमपादोत्क्षेपणाकुञ्चनानां करणमिहगतिज्ञाः प्राहुरन्ये पुलाख्यामिति ॥ पार्ष्णिप्रधानं प्रविधायरागादश्वांश्च शीघ्रान्यचरेत्पुलाख्यामित्यादिः ॥

पुलाक : । पुं० तुच्छधान्ये । असार धान्ये । सक्तुकेऽपि ॥ भक्तसिक्थे ॥ पौलनम् । पुल० । सं० क्विप् । पुलमकति । अक० । कर्म्मण्यण् ॥ पौलस्तिना । बलाकादयश्चेतिसाधुः ॥

पुलाकी । पुं० वृक्षे ॥

पुलायितम् । न० अश्वगतौ । विक्रान्तौ ॥ पुलाख्यया अयितंगतिः पुलायितम् । अय० । क्त : ।

पुलिनम् । न० तोयोत्थिततटे । जलाद् चिरोत्थिततटे । पुल० । टाप० । इ० भा० ॥ पोलति पुलमहत्त्वे । पुलितलिभ्याश्चेतिनन् ॥ द्वीपे ॥

पुलिन्द : । पुं० अरण्यचरेम्लेच्छजात्यन्तरे । शवरे ॥ पोलति । पुल० । कुलिपुल्योः किन्दच् ॥

पुलोमजा । स्त्री० इन्द्राण्याम् । पुलोम्नोमुनेर्जाता । पञ्चम्यामजाताविति डः ॥

पुलोमद्विट् । पुं० इन्द्रे ॥

पुलोमा पुं० दानवान्तरे । मुनिविशेषे॥

पुलोमारि : । पुं० शचीपतौ ॥

पुल्कस : । पुं० पुक्कसे ॥ पृ०॥

पुषा । स्त्री० लाङ्गलिकौहक्षे ॥

पुषित : । त्रि० पुष्टे । कृतपोषणेपक्षिमृगादौ ॥ पुष्यतेस्म । पुष० । क्त : । भौवादिकस्वादिट् ॥

पुष्कर : । पुं० रोगवि० ॥ नागवि० ॥ सारसपक्षिणि ॥ नृपवि० । नल

राजभ्रातरि ॥ वरुणपुत्रे ॥ यक्षान्तरे ॥ मेघाधिपविशे० ॥ पुष्करी दुष्करजलः ॥ द्वीपविशे० ॥ न० खे अम्बुनि ॥ पद्मे । सिताम्भोजे । तूर्यवक्त्रे ॥ खड्गफले ॥ हस्तिहस्ताग्रे ॥ काण्डे ॥ कुष्ठौषधे ॥ द्वीपविशे० ॥ तीर्थविशे० ॥ यथा । गायत्र्यास्तु परं स्थानं श्रीमत्पुष्करमीरितमिति ॥ तत्त्वब्रह्मणः स्थानम् ॥ पुष्यति । पुष्णातिवा पुष्यते० अनेनवा । पुष० । पुषः किदितिकरन्किच्चस्य ॥

पुष्करकः । पुं० चिताभूमिराच्छादनार्थं क्रियमाणेष्टकानिर्मितदेवकुलाकारगृहे ॥

पुष्करकर्णिका । स्त्री० स्थलपद्मिन्याम् ।

पुष्करजः । पुं० पुष्करमूले ॥ त्रि० । पुष्करोत्पन्ने ॥

पुष्करणी स्त्री० पुष्करद्वीपनद्याम् ॥

पुष्करद्वीपः । पुं० सप्तद्वीपान्तर्गतद्वीपविशेषे ॥ नदीपुष्करणीनामहेमपुष्करमण्डिता । तयासपुष्करद्वीपः ख्यापितः सुरसेवितः ॥

पुष्करनाडी । स्त्री० स्थलपद्मिन्याम् ॥

पुष्करमूलम् । न० कुष्ठद्रव्यमूले । पौष्करे ॥ पुष्करस्यकुष्ठौषधस्यमूलम् ॥

पुष्करवान् । पुं० हस्तिनि ॥ पुष्करमस्त्यस्य । मतुप् ॥

पुष्करशिफा । स्त्री० पुष्करमूले ॥

पुष्कराक्षः । पुं० विष्णौ ॥ पुष्करेणोपमितेअक्षिणीअस्य । बहुव्रीहौसक्थ्यक्ष्णोः स्वाङ्गात्षजितिषच् ॥ पुष्करहृदयपुण्डरीकमश्नोतिव्याप्नोत्यन्तर्यामिरूपेणेतिपुष्करोपपदात्अशूव्याप्ताविति धातोः कर्म्मण्यण् ॥ पुरुहूतादेव्याः स्थाने ॥

पुष्करावर्त्तः । पुं० मेघभेदे ॥

पुष्कराह्वः । पुं० सारसपक्षिणि ॥

पुष्कराह्वयः । पुं सारसे ॥ न० पुष्करमूले ॥

पुष्करिणी । स्त्री० इभ्याम् । हस्तिन्याम् ॥ सरोजिन्याम् । कमलिन्याम् । कृत्रिमजलाशये ॥ पुष्करमूले ॥ स्थलपद्मिन्याम् ॥ समचतुरस्रखाते । यथा । चतुर्विंशाङ्गुलोहस्तोधनुस्तच्चतुरुत्तरः । शतधन्वन्तरञ्चैव तावत्पुष्करिणीमता । एतत्पञ्चगुणः प्रोक्तस्तडागइतिनिश्चयः ॥ तेन चतुर्द्विंशतिहस्तान्यूनतायांच तु शतहस्तान्यूनाभ्यन्तरत्वेनपुष्करिणी । एतज्जलाशयाधारपरंन तु० उपरितटम् । शतेनधनुर्भिः पुष्करिणी । इतिनव्यवर्द्धमानधृतोवशिष्ठः ॥ पुष्करागिसन्त्यस्याम् । पुष्करादिभ्योदेशे० इतीनिः ॥

पुष्करी । पुं० हस्तिनि ॥ मत्वर्थीय इनिः ॥

पुष्करेचय : । पुं० प्रभासतीर्थाधिष्ठात्र्यांदेव्याम् ॥

पुष्कल : । पुं० भरतात्मजे । पुष्कलावत्त्याभर्त्तरि ॥ न० । ग्रासचतुष्टयात्मकभिक्षायाम् ॥ यथा । भिक्षामाहुर्ग्रासमात्रमन्नं तस्माच्चतुर्गुणम् । पुष्कलंहन्तकारन्तुतच्चतुर्गुणमुच्यते ॥ स्मृति ॥ अष्टकुञ्चिपरिमितेधान्यमानभेदे ॥ यथा । अष्टमुष्टिर्भवेत्कुञ्चिः कुञ्चयोष्टौचपुष्कलम् । पुष्कलानिचचत्वारिस्याढक : परिकीर्त्तित : ॥ त्रि० परिपूर्णे ॥ श्रेष्ठे ॥ पुष्यति । पुष० । पुष : कित्दित्यनुवृत्तौ० कलँश्चेतिकलन्कित् ॥ स्त्रियांगौरादित्वात्पुष्कली ॥ सि० लज्वा ॥

पुष्कलक : । पुं० गन्धमृगे ॥ क्षपणे ॥ कीलके ॥

पुष्कस: । पुं० पुक्कसे ॥ पृ० ॥

पुष्ट: । त्रि० पालिते । कृतपोषणे । पुष्ठिते ॥ पुष्यतेस्म । पुष० । क्त : । दैवादिकत्वान्नेट् ॥

पुष्टि : । स्त्री० पोषणे ॥ वृद्धौ । अवयवोपचये ॥ अश्वगन्धायाम् ॥ मातृकाविशेषे ॥ यथा । पुष्टिर्गणपते: पत्नीपूजिताजयतोतले । ययाविना परिक्षीणा : पुमांसोयोषितोपिचेतिभागवतम् ॥ पोषणम् । पुष० । क्तिन् ॥ व्रतकाले० । पुष्टिर्धनजनादीनांवृद्धिरित्यभिधीयते ॥

पुष्टिकर : । त्रि० पुष्टिजनके ॥

पुष्टिका । स्त्री० जलशुक्तौ ॥

पुष्टिकान्त : । पुं० श्रीगणेशे । विनायके ॥

पुष्टिदा । स्त्री० अश्वगन्धायाम् ॥ वृद्धौ ॥ पुष्टिदात्र्याम् ॥

पुष्पम् । न० सुमनसि । प्रसूने । कुसुमे ॥ स्नानंकृत्वातुयेकेचित्पुष्पंचिन्वन्तिवैद्विजा : । देवतास्तन्नगृह्णन्ति भस्मीभवतिदारुवदिति लघुहारीत : ॥ विकाशे ॥ स्त्रीरजसि ॥ धनदविमाने ॥ नेत्ररुग्भेदे । फूला फूली० इ० भा० प्र० ॥ अस्यौषधं यथा । हरीतकीवचाकुष्ठं पिप्पलीमरिचानिच । विभीतकस्यमज्जाच शङ्खनाभिर्मन : शिला ॥ सर्वमेतत् समंकृत्वाच्छागीक्षीरेणपेषयेत् : नाशयेत्तिमिरंकण्डूंपटलान्यर्बुदानि च ॥ अधिकानिचमांसानियश्चरात्रौनपश्यति । अपिद्विवार्षिकंपुष्पं मासेनैकेनसाधयेत् ॥ वर्त्तिश्चन्द्रोदयानामनृणांदृष्टिप्रसादनी ॥ इतिच क्रपाणिदत्त : ॥ पुष्यतिपुष्पतेवा । पुष्पविकसने । पचाद्यच्० वञ्वा ॥

पुष्पकम् । न० रीतिपुष्पे ॥ पुष्पवदाभरणभूतेधनदस्यविमाने ॥ पुष्पकोस्त्रीतिशब्दार्णवात्पुल्लिङ्गोपि । नेत्ररोगविशेषे । पुष्पे ॥ रत्नकङ्कणे ॥

रसाञ्जने ॥ लोहकाङ्क्षे ॥ मृद्दार शकव्याम् ॥ कासीसे ॥ पुष्पति । पुष्प० । क्वुन् ॥ पुष्पमिववा । इवेप्र तिकृताविति कन् ॥

पुष्पकरण्डकम् । न० उज्जयिन्यामभि वस्योद्याने ॥

पुष्पकरण्डिनी । स्त्री० अवन्त्याम् । उज्जयिन्याम् ॥

पुष्पकाशीशम् । न० किञ्चित्पीतेका सीसे । कंसके । नेत्रौषधे ॥

पुष्पकीट : । पुं० भ्रमरे । रोलम्बे ॥ कुसुमकृमिमात्रे ॥

पुष्पकेतन : । पुं० कामदेवे ॥

पुष्पकेतु: । पुं० रीतिपुष्पे । कुसुमा ञ्जने ॥ पुष्पस्यकेतुरिवनाशकत्वात्

पुष्पघातक : । पुं० वेणुवृक्षे ॥ दम नवृक्षे ॥

पुष्पज : । पुं० पुष्परसे । पुष्पद्रवे ॥

पुष्पद : । पुं० वृक्षे ॥ त्रि० । पुष्पदा तरि ॥

पुष्पदन्त: । पुं० वायुकोणस्थदिग्गजे ॥ विद्याधरविशेषे ॥ सुविध्याख्य- जिने ॥ पुष्पमिवदन्ता : यस्यस : ॥

पुष्पदन्तक : । पुं० गन्धर्वविशेषे ॥

पुष्पद्रव : । पुं० पुष्पस्वेदे । पुष्पसारे ॥

पुष्पधनु : । पुं० कामदेवे ॥ पुष्पं धनु रस्य । वासंज्ञायामित्यनङ्भावेसा न्त : ॥

पुष्पधन्वा । पुं० मदने । कामे ॥ पुष्पं धनुरस्य । वासंज्ञायामित्यनङ् ॥

पुष्पनिच : । पुं० भ्रमरे ॥

पुष्पनिर्यासक : । पुं० पुष्पद्रवे ॥

पुष्पन्धय : । पुं० भ्रमरे ॥ पुष्पाणिध यति । धेट्० । मुञ्जकुलास्यपुष्पेषु धेट : खशितिकेचिदितिखश् । अ रुर्द्विषदितिमुम् ॥

पुष्पपथ : । पुं० भगे । योनौ ॥

पुष्पपात्रम् । न० पुष्पाधारे ॥

पुष्पपुरम् । न० पाटलिपुत्रनगरे ॥

पुष्पफल : । पुं० कपित्थे ॥ कूष्माण्डे ॥ पुष्पयुक्तंफलमस्य ॥

पुष्पबलि : । पुं० वास्तुपूजायाम् ॥

पुष्पमास : । पुं० वसन्ते ॥ पुष्पाणां मास : ॥

पुष्पयोग : । पुं० यात्रायोगांतरे ॥ यथा । भौमेस्वराशिगेलग्ने सौम्ये केन्द्रत्रिकोणगे । पुष्पयोगोरिविपि नकुठार : सङ्गराङ्गणे ॥

पुष्परक्त : । पुं० सूर्यमणिवृक्षे ॥

पुष्परथ : । पुं० चक्रयाने । युद्धं विना यात्रोत्सवादौ सुखभ्रमणार्थरथे ॥ सुकुमारत्वात्० पुष्पमिवरथ : ॥

पुष्परस : । पुं० मकरन्दे ॥ पुष्पस्य रस : ॥

पुष्परसाह्वयम् । न० मधुनि ॥

पुष्पराग : । पुं० पीतमणौ । वाचस्प तिवल्लभे । पोखराज० इ० भा० ॥ अस्यलक्षणंयथा । सुच्छायपीत

गुरुगात्रसुरङ्गशुद्धं स्निग्धस्वच्छनिर्मल मतीवसुवृत्तशीतम् । यः पुष्पराग सकलंकलयेदमुष्य पुष्णातिकीर्त्तिं मतिशौर्यसुखायुरर्थान् ॥ तस्यापल क्षणम्यथा । कषाविन्दङ्कितं रूक्षं धवलंमलिनंलघु । विच्छायंशर्करा गारंपुष्परागंसदोषकं ॥ अस्यपरी क्षालक्षणं यथा । घृष्टोविकाशयेत् पुष्परागमधिकमात्मीयम् । नखलु पुष्परागोजात्यतयापरीक्षकैरक्तः ॥

पुष्परेणुः । पुं० परागे ॥

पुष्परोचनः । पुं० नागकेशरे ॥

पुष्पलावः । पुष्पलावी । पुं० } मालाकारे ॥

पुष्पलिट् । पुं० भ्रमरे ॥ पुष्पंलेढि । लिह ० । क्किप् ॥

पुष्पवटी । स्त्री० फुलौरी० इ० प्र० खाद्यप्रभेदे ॥

पुष्पवन्तौ । पुं० एकयोक्त्यानित्यद्वि वचनान्तश्चन्द्रसूर्ययोः ॥ चन्द्रा र्कौ० एकयोक्त्यासाधारणवचनं० पुष्पवन्तौ० प्रत्येकंपुष्पवानितिन प्रयोक्तव्यमितिभावः । पुष्पविकास ने । भावेघञ् । पुष्पः प्रकाशस्त द्वन्तौ ॥

पुष्पवती । स्त्री० रजस्वलायाम् ॥ तीर्थविशेषे ॥ पुष्पंरजोऽस्त्यस्याः । मतुप् ॥ त्रि० पुष्पविशिष्टे ॥

पुष्पवाटिका । स्त्री० पुष्पवाट्याम् ॥

पुष्पवाटी । स्त्री० पुष्पोद्याने । फुल वारी० फुलवरिआ० इ० भा० ॥ पुष्पाणांवाटी ॥

पुष्पबाणः । पुं० मन्मथे । कामदेवे ॥ पुष्पाण्येवबाणाअस्य ॥

पुष्पवाहनः । पुं० पुष्करद्वीपस्थिते नृपे ॥

पुष्पशकटी । स्त्री० आकाशवाण्याम् । दैवप्रश्ने ॥

पुष्पशून्यः । पुं० उदुम्बरे ॥ त्रि० कुसुमरहिते ॥

पुष्पसमयः । पुं० वसन्ते । चैत्रवैशा खयोः ॥ पुष्पाणांसमयः ॥

पुष्पसायकः । पुं० पुष्पधन्वनि । कामदेवे ॥

पुष्पसारः । पुष्पद्रवे ॥ पुष्पस्यसा रः ॥

पुष्पसिता । स्त्री० फूलसक्कर० इ० भा० प्र० द्रव्ये ॥ भवेत्पुष्पसिता शीतारक्तपित्ताहरीलघुः ॥

पुष्पसौरभा । स्त्री० कलिकारीवृक्षे ॥

पुष्पस्वेदः । पुं० पुष्पद्रवे ॥

पुष्पहासः । कुसुमविकासे ॥ पुष्पा णांमुकुलात्मनास्थितानांहासोविका शः पुष्पहासः ॥

पुष्पहासा । स्त्री० रजस्वलायाम् ॥

पुष्पहीना । स्त्री० उदुम्बरे ॥ निष्पला याम् । रजः शून्यायाम् ॥

पुष्पा । स्त्री० । कर्णपुर्याम् । मालि

न्याम् । भागलपुर० इ० प्र० नगरे ॥

पुष्पाजीव: । पुं० मालाकारे ॥

पुष्पाञ्जनम् । न० अञ्जनवि० । कौसुम्भे । पुष्पकेतौ ॥

पुष्पाञ्जलि: । पुं० प्रसूनानामञ्जलौ । कुसुमाञ्जलौ ॥

पुष्पाण्डक: । पुं० शालिजातिविशेषे ॥

पुष्पाम्बुज: । पुं० पुष्पद्रवे ।

पुष्पावचायी । पुं० मालाकारे ॥

पुष्पासवम् । न० मधुनि ॥ पुं० पुष्पमकरन्दकृतवासवे ॥

पुष्पास्त्र: । पुं० कन्दर्पे । मकरध्वजे ॥

पुष्पाह्वा । स्त्री० शतपुष्पायाम् ॥

पुष्पिका । स्त्री० दन्तमले । लिङ्गमले ॥

पुष्पित: । त्रि० जातपुष्पे वृक्षादौ । प्रफुल्ले ॥ पुष्पवति ॥ पुष्पाणिसंजातान्यस्य । ता० इतच् ॥ रमणीये ॥ आपातरमणीये ॥

पुष्पिता । स्त्री० रजस्वलायाम् ॥

पुष्पिताङ्ग: । त्रि० वृद्ध दृष्टौ ॥

पुष्पिताग्रा । स्त्री० वर्णवृत्तेष्वर्द्धसमवृत्तप्रभेदे ॥ लक्षणंयथा । अयुजिनयुगरेफतोयकारोयुजितुनजौजरगाश्च पुष्पिताग्रा ॥ य० । करकिसलयशोभयाविभान्तीकुचफलभारविनम्रदेहयष्टि: । स्मितरुचिरविलासपुष्पिताग्राव्रजयुवतिर्व्रततिर्हरेर्मुदेऽभूत् ॥

पुष्येषु: । पुं० कामदेवे ॥ पुष्पाणिइषवोऽस्य ॥

पुष्य: । पुं० अष्टमनक्षत्रे । सिध्ये । तिष्ये ॥ पुष्य: सर्वार्थसाधक: ॥ तत्रजातस्यफलंयथा । प्रसन्नगात्र: पितृमातृभक्त: स्वधर्मयुक्तोऽभिनयाभियुक्त: । भवेन्मनुष्य: खलुपुष्यजन्मासम्मानचामीकरवाहनाढ्य: ॥ पौषमासि ॥ कलियुगे ॥ यथा ॥ सत्सम्प्रदायप्रथनायपुष्येशिष्यैश्चतुर्भि: सहयोवतीर्ण: । उक्तोबृहत्सङ्गमतन्त्रराजे श्रीशङ्कराचार्यगुरुं तमीडे ॥ पुष्णातिकार्याणि० पुष्यन्त्यस्मिन्निति वा । पुष्यसिध्यौनक्षत्रइतिकर्त्तर्यधिकरणेचक्यप् निपातित: ॥

पुष्यध: । पुं० मूर्जकण्टके । सङ्करजातिविशेषे । आवन्त्ये ॥

पुष्यरथ: । पुं० युद्धंविनासुखभ्रमणारथे । चक्रयाने ॥ असौपुष्यरथश्चक्रयानंनसमराययत् ॥ पुष्पकवरथ: । पुष्येयात्रोत्सवादौरथोवा ॥

पुष्यस्नानम् । न० पुष्याभिषेके ॥ यथा । मूलंमनुजाधिपति: प्रजातरोलघुपघातसंस्कारात् । अशुभंशुभञ्चलोकेभवतियतोतोनृपतिचिन्ता ॥ पुष्यस्नानंनृपते: कर्तव्यंदैवविपत्रोधेस्याम् । नात: परंपवित्रंसर्वोत्पातान्तकरमस्ति ॥ अस्यविधि:

पुस्तकर्म्मा | पूगः

कालिकापुराणेवाराह्याञ्चद्रष्टव्यः ॥
पुष्या । स्त्री० पुष्यनक्षत्रे ॥
पुस्तम् । न० पुस्तके । लिखितग्रन्थे ॥
यथा । विधायपूजयेन्नित्यंपुस्तपूजो क्तसिद्धये॥ लेप्यादिशिल्पकर्माणि॥
आदिनाकाष्ठपुत्तलिकादयोबोध्याः ॥ यथा । मृदावादारुणावाथवस्त्रेणा प्यथचर्मणा । लोहरत्नैःकृतंवापिपु स्तमित्यभिधीयते ॥ पुस्यते । पुस्त आदरादौणिच् । एरच् ॥
पुस्तकम् । न० पुस्ते । लिखितग्रन्थे । पोथी इ० भा० ॥ तस्यपरिमाणं यथा । मानंवक्ष्येपुस्तकस्यशृणुदे- विसमासतः । मानेनापिफलंवि- द्याद्मानेश्रीर्हताभवेत् ॥ हस्तमा त्रंमुष्टिमात्रमावाहुद्वादशाङ्गुलं।दशा ङ्गुलंतथाष्टौचततोहीनंनकारयेत् ॥
पुस्तकलेखकस्यपूजाफलंयथा। आर ब्धेचसमाप्तेच लेखकंप्रतिपूजयेत् हरिद्रागन्धपुष्पाद्यैर्वस्त्रैश्चसुमनोह- रैः ॥ यावदक्षरसङ्ख्यानंप्रतिपत्रे चसुन्दरि । तावद्युगसहस्राणिब्र- ह्मलोकेवसेच्चिरम् ॥ वेतनग्रहणेले खकस्यदोषोयथा । वेतनंयस्तुगृह्- णीयात्लिखित्वापुस्तकंसतु । याव दक्षरसङ्ख्यानंतावन्नरकेवसेदिति योगिनीतन्त्रे तृतीय ३ भागे ७ पटलः ॥
पुस्तकर्म्मा । पुं० लेप्यादिशिल्पकर्म कर्त्तरि ॥
पुस्तकशिम्बिका । स्त्री० शिम्बिप्रभेदे ॥ पुस्तशिम्ब्याम् ॥
पुस्तशिम्बिः । स्त्री० पुस्तकशिम्बि- कायाम् ॥
पूगः । पुं० क्रमुके । गुवाके ॥ वृन्दे । नानाजातीयानामनियतवृत्तीना मर्थकामप्रधानानांसङ्घे ॥ क्लृप्तदाक णि ॥ न० गुवाकफले । उद्वेगे ॥
यथा । पूगंगुरुहिमंरूक्षंकषायंकफ पित्तहृत् । मोहनन्दीपनंरुच्यमास्य वैरस्यनाशनम् ॥ आर्द्रंतद्गुर्वभिष्य न्दिवह्निदृष्टिहरंस्मृतम् । स्विन्नंदो षत्रयच्छेदिदृढमध्यंतदुत्तमम् ॥
अस्यपाकोयथा । शृङ्गाटकंजीरकि द्वे जातीकोषञ्चवंशजम् । लवङ्ग- धान्यकञ्चापिप्रत्येकंकर्षयुग्मकम् ॥ हैयंगवीनंकुडवंसिताचार्द्धतुलोज्व ला । धात्रीवरीद्व्यञ्जलिस्तपूगस्या ष्टपलानिच ॥ उलूखलेचसंकुट्यचू- र्णीकीराढकान्वितम् । सम्पाच्यभ- क्षितंहन्यात्वासरादौयथोचितम् । ज्वरदाहञ्चपित्तञ्चयक्ष्मशूलगुदाङ्कु रान् ॥ छर्दिंप्रमेहंमूत्राणामाघातञ्च विनाशयेत् । वलप्रदञ्चभंदञ्चस्त्रीणा ञ्चैतद्रसायनमिति ॥ पुनाति० पवतेवा० पूयतेमुखमनेनवा । पू ञ्० । कापूखडिभ्यः । किदिति गन् ॥

पूगकृतः । त्रि० पुञ्जीकृते ॥ अपूगः पूगः सम्पद्यमानः कृतः श्रेण्यादयः कृतादिभिरितिसमासे० श्रेण्यादिषुच्व्यर्थवचनमिति च्व्यर्थता ॥

पूगतिथः । त्रि० पूगानांपूरणे ॥ बहुपूगेतिडटितियुगागमविधानादसंख्यात्वेपिडट् ॥

पूगपात्रम् । न० पूगपीठे । फलवके ॥

पूगपीठम् । न० कटकोले । पतद्ग्रहे ॥

पूगपुष्पिका । स्त्री० कुहली । विवाहसम्बन्धिनुपताम्बूले ॥

पूगफलम् । न० उद्वेगे । चिक्कण्याम् ॥

पूगयाजकः । पुं० बहुयाजके ॥

पूगरोटः । पुं हिन्तालवृक्षे ॥

पूगिका । स्त्री० क्रमुके ॥

पूगिकाफलम् । न० पूगीफले ॥

पूगी । स्त्री० पूगे । पूगवृक्षे ॥

पूगीफलम् । न० उद्वेगे । पूगफले ॥

पूजकः । त्रि० पूजाकर्त्तरि ॥

पूजनम् । न० अर्चने । पूजायाम् । । यथा ॥ शास्त्रप्रणामशुश्रूषादौ ॥ पूजपूजायाम् । ल्युट् ॥

पूजनीयः । त्रि० श्रुताचाराभिजनादिभिः पूजायोग्ये ॥ पूज्ये ॥ पूजेरनीयर् ॥

पूजा । स्त्री० नमस्कारयाम् । अपचितौ ॥ सपर्यायाम् ॥ पादप्रक्षालनार्घ्यनवनदानादिरूपायामर्चायाम् ॥ देवार्चनायाम् ॥ तस्याः सामान्यानुष्ठानंयथा । आदावृष्यादिकन्यासः करशुद्धिस्ततः परम् । अङ्गुलिव्यापकन्यासौहृदादिन्यासएवच ॥ तालत्रयञ्चदिग्बन्धः प्राणायामस्ततः परम् । ध्यानंपूजाजपश्चैव सर्वतन्त्रेष्वयंविधिरितियामलवचनम् ॥ पूजनम् । पूज० । चिति पूजोत्यङ् ॥

पूजार्हः । त्रि० मान्ये । अर्घभाजि ॥ कुसुमादिभिरर्चनयोग्ये । पूज्ये ॥ पूजामर्हति । अर्हपूजायाम् । अर्हेर्न्द्वत्वच् ॥ स्त्रियांपूजार्हा ॥

पूजितः । त्रि० सत्कृते । अर्चिते ॥ पूज्यतेस्म ॥ पूज० । क्तः ॥ देवे ॥ पूजितोयः सुरासुरैरित्यादौभूतेक्तोनतुवर्त्तमाने० तेन तृतीयातत्रोपपद्यते । अन्यथाक्तस्यचवर्त्तमानत्वेतिषष्ठीस्यात् ॥

पूजितव्यः । त्रि० पूजनीये ॥

पूजिलः । पुं० देवतायाम् ॥ त्रि० पूज्ये ॥

पूज्यः । पुं० श्वशुरे ॥ त्रि० वन्द्ये पूजार्हे । प्रतीक्ष्ये ॥ पूजार्हो य

था । गुरूणामपिसर्वेषांपूज्याः पञ्चविशेषतः । तेषामाद्यास्त्रयः श्रेष्ठास्तेषांमातासुपूजिता ॥ यो भावयतियासूतेयेनविद्योपदिश्यते ज्येष्ठः भ्राताचभर्ताचपंचैतेगुर वस्मृताइतिकौर्मे उपरिभागे ११ अध्याय :॥ पूज्यते । पूज० । । अर्चायत् ॥ पूजयितुमर्हः । पूज० । अर्हेकृत्यतृचश्चेतियत् ॥ सर्वस्यैवहिदानस्यगृहीतागुरुरुच्य ते । कन्यायाश्चैव विद्यायाः प्रदातापूज्यतेगुरुः ॥

पूज्यपादः । पुं० भगवच्छङ्कराचार्ये ॥

पूलः । पुं० शङ्खे ॥ श्वेतकुशे ॥ विकङ्कतवृक्षे ॥ न० बहुलीकृते । अपनीततुषधान्ये ॥ सत्यवचने ॥ त्रि० व्रतादिनाशुद्धे । पवित्रे । प्रयते ॥ दधिगोमयादौसास्यप वित्रे० स्वभावपवित्रेवा । पवित्रे मेध्ये ॥ दृष्टिपूतंन्यसेत्पादंवस्त्र पूतंजलंपिवेत् । सत्यपूतांवदेद्वा चंमनःपूतंसमाचरेत् । शठिते बहुलीकृते ॥ पूयतेस्म । पूङ्० पूञ्० वा । क्तः ॥ पवतेस्मवा । पूङोगत्यर्थेतिक्तः ॥

पूतक्रतायी । स्त्री० इन्द्राण्याम् । शच्याम् ॥ पूतक्रतोः स्त्री० । पूतक्रतोरैचेत्यैकारादेशोङीप् च ॥

पूतक्रतुः । पुं० इन्द्रे ॥ पूताःक्रतवो येन ॥

पूतक्रतुः । स्त्री० देव्याम् ॥ पूताः क्रतवोयस्याः ॥

पूतगन्धः । पुं० बर्बरे ॥

पूततृणम् । न० श्वेतकुशे ॥ कुशे ॥ पूतञ्चतत्तृणञ्च ॥

पूतद्रुः । पुं० पलाशवृक्षे ॥

पूतधान्यम् । न० तिले ॥ पूतञ्चतद्धा न्यञ्च ॥

पूतना । स्त्री० हरीतक्याम् ॥ पूतना स्थिमतीसूक्ष्मेतिनिरूपणात् ॥सिन्धु देशजातावल्पत्वक्स्थूलास्थिहरीतकी लेपनेप्रशस्ते तिराजवल्लभः ॥ गन्ध मांस्याम् ॥ बालरोगविशेषे ॥ बाल मातृकाविशेषे ॥ दानवीविशेषे । बकासुरभगिन्याम् ॥ यशोदकीर्यं स्तनकालकूटंजिघांसयापाययदप्य साध्वी । लेभेगतिंधात्र्युचितांत- तोन्यंकंवादयालुंशरणंव्रजेम ॥ पू- तंकरोति । तत्करोतीतिणिच् । बहुलमन्यत्रापीतियुच् ॥

पूतनारिः । पुं० बालमुकुन्दे । श्री कृष्णे ॥ पूतनायाअरिः ॥

पूतनासूदनः । पुं० श्रीकृष्णे ॥ पूत नांसूदितवान्०सूदयतिवा । सूद- क्षरणे । नन्द्यादित्वाल्ल्युः ॥

पूतनाहा । पुं० श्रीकृष्णे ॥ पूतनां- हन्ति । हन० । क्विप् ॥

पूतपाप : । त्रि॰ निरस्तस्वर्गभोगप्रति बन्धकपापे ॥

पूतफल : । पुं॰ पनसे ॥

पूता । स्त्री॰ दूर्वायाम् ॥

पूतात्मा । पुं॰ ईश्वरे ॥ पूत : शुद्ध: सत्त्वादिगुणसम्बन्धरहित : आत्मा स्वरूपंयस्य ॥ पूतश्चासावात्माचेति वा ॥ शुद्धदेहे ॥ शुद्धान्त : करणे ॥ पूतआत्मायस्य ॥

पूति : । स्त्री॰ दुर्गन्धे ॥ पवित्रतायाम् ॥ खट्टाशमुष्के ॥ न॰ गोहिषहणे ॥

पूतिक : । पुं॰ पूतिकरञ्जे ॥ पुनाति । पूञ्॰ । तिन्तिडीकादयश्चेति॰ इकन् ॥ न॰ विष्टायाम् ॥

पूतिकरज : । पुं॰ लटाकरञ्जवृक्षे । कलिकारके । कलहनाशने । कण्टवल्तिकरञ्जे । काँटाकरञ्जइति॰ भा॰ ॥ पूतिश्चासौकरजश्च ॥

पूतिकरञ्ज : । पुं॰ पूतिकरजे ॥

पूतिकर्णक : । पुं॰ कर्णरोगविशेषे ॥ तल्लक्षणंयथा । कर्णविद्रधिपाकाद्वा जायतेचाम्बुपूरणात् । पूयंस्रवतिवापूतिसज्ञेय: पूतिकर्णक : ॥ अस्यौषधंयथा । निर्गुण्डीसुरसस्तैलंसिन्धूधूमरजोगुड : पूरणात्पूतिकर्णस्यशमनोमधुसंयुत : ॥ अथवा । वरुणार्द्रकपित्थाम्रजम्बूपल्लवसाधितम् । पूतिकर्णापहंतैलंजालीपचरसेनवेति चक्रपाणिदत्त : ॥

पूतिका । स्त्री॰ मार्जार्याम् ॥ पोईइ॰ प्र॰ लताशाके । उपोदक्याम् ॥

पूतिकामुख : । शम्बूके ॥

पूतिकाष्ठम् । न॰ सरलद्रुमे ॥ देवदारुमहीरुहे ॥ पूतिचतत्काष्ठञ्च ॥ पूते : पावनस्यकाष्ठंवा ॥

पूतिकाष्ठकम् । न॰ पूतिकाष्ठे ॥

पूतिगन्ध : । पुं॰ गन्धके ॥ हिङ्गुदीव्रे ॥ न॰ रङ्गे ॥ त्रि॰ दुर्गन्धे ॥

पूतिगन्धि : । }
पूतिगन्धिक : } त्रि॰ दुर्गन्धे ॥

पूतिगन्धिका । स्त्री॰ वाकुच्याम् ॥

पूतितैला । स्त्री॰ ज्योतिष्मत्याम् ॥

पूतिदारु : । न॰ देवदारुणि ॥

पूतिनस्य : । पुं॰ नासारोगभेदे ॥ तल्लक्षणंयथा । दोषैर्विदग्धैर्गलतालुमूलेसम्मूर्छितोयस्यसमीरणस्तु । निरेतिपूतिर्मुखनासिकाभ्यांतंपूतिनस्यंप्रवदन्तिरोगम् ॥ औषधन्तु । । व्याघ्रीदन्तीवचाशिग्रुसुरसव्योषसम्भवै : । पाचितंलावणंतैलंपूतिनासागदंजयेत् ॥ अथवा । त्रिकटुविडङ्गकसैन्धवबृहतीफलशिग्रुसुरसदन्तीभि : । तैलङ्गोजलसिद्धंनस्यंस्यात्पूतिनस्यस्य ॥

पूतिपत्र : । पुं॰ श्योनाकविशेषे ॥

पूतिपुष्पिका । स्त्री॰ मातुलुङ्गायाम् ।

पूतिफली । स्त्री॰ वाकुच्याम् । सोम

उत्पदातु ॥ तत्रजातस्य फलं । जि-
तेन्द्रिय : सर्वकालासु रूपोजितारि
पक्ष : खलुतस्य नत्यम् । सदैन्सदो
यातस्तुतरां सो विवादाभाद्रपदा
प्रसूतौ ॥ पूर्वाभद्राश्च भद्रपदाश्च ॥
एकवचनान्तोपि ॥

पूर्वपक्ष : । पुं० जिनभि० । जलेन्द्रे ।
नविभद्रे ॥

पूर्वरङ्ग: । पुं० नाट्यशालायाम् ॥ ना
ट्योपक्रमे । प्राक्रङ्गीते । गुरुनि
कायाम् ॥ रङ्गप्रधानाख्योरङ्गविघ्न
शान्तिकारीमाल्टोपाठगीतवादित्रा
यनेकाङ्गविशेषोनाट्यादौकर्तव्य:
कार्य विशेष: पूर्वरङ्ग: । तदुक्तंवस
न्तराजीये । यन्नाट्यवस्तुन: पूर्वरङ्ग
विघ्नोपशान्तये । कुशीलवा : प्रकु-
र्वन्तिपूर्वरङ्ग : प्रकीर्तित: इति ॥
पूर्वरङ्गं विधायादौसूत्रधारेविनिर्गते
। प्रविश्यतद्वदपर:काव्यमास्थापये-
ट : ॥ प्रथमंपूर्वरङ्गस्ततः प्र...
नेतिच । चारम्भे सर्वनाट्यानामे
तत्सामान्यमिष्यते ॥ पूर्वरज्यतेऽ
स्मिन् । रञ्ज घञ् । कुत्वम् ॥

पूर्वराग: । पुं० नायिकानायिकयोर्द
शाविशेषे ॥ अवणादर्शनाद्वापिमि
थ : संगूढरागयो : । दशाविशेषो
योऽप्राप्तौपूर्वराग:सउच्यते ॥ इ० ॥

पूर्वरात्र : । पुं० रात्रे:पूर्वभागे ॥ रा
त्राह्नाहा : पुंसि ॥

पूर्वरूपम् । न० पूर्वलक्षणे ॥ वैद्यके
भाविव्याधिबोधकचिह्ने ॥

पूर्ववत् । न० अनुमानविशेषे ॥ यथा
। दृष्टस्वलक्षणसामान्यविषयंयत्०
तत्पूर्ववदुच्यते । पूर्वंप्रसिद्धमदृष्ट
स्वलक्षणसामान्यमितियावत्०तद
स्यविषयस्त्वं नास्ति०अनुमानज्ञान
स्येतिपूर्ववत् । यथाधूमादूवह्नित्व-
सामान्यविशेष : पर्वतेनुमीयते०
तस्यवह्नित्वसामान्यस्यस्वलक्ष
वह्निविशेषोदृष्टोरसवत्याम् । वीता
वीतभेदात्तद्विविधम् ॥

पूर्ववादी । त्रि० प्रागभियोक्तरि । प्र-
थमविवादिनि ॥

पूर्वविद् । त्रि० अतीतज्ञे ॥

पूर्वशैल : पुं० उदयपर्वते ॥

पूर्वसर : । त्रि० अग्रगामिनि ॥

पूर्वा । स्त्री० पूर्वदिशि । प्राच्याम् ॥
तद्दिग्भववायुगुणा : । पूर्वस्तुमधु
रोवात : स्निग्ध : कटुरसान्वित :
। गुरुर्विदाहजननोवातल : पित्त-
नाशन : ॥ इति ॥

पूर्वाद्रि: । पुं० उदयाचले । दिनमूर्द्ध-
नि ॥

पूर्वाषाढा । स्त्री० अश्विन्यादिसप्तविं
शतिनक्षत्रान्तर्गतविंशतिसंख्याकन
क्षत्रे ॥ तत्रजातस्यफलंयथा । भूयो
भूय : स्वप्रमानानुरक्तो भक्तोदेवेब
न्धुमान्योतिदक्ष : । पूर्वाषाढाज-

स्त्रकालेयदिव्याषाढाषाढः स्याद्दिवि वर्गेनितान्तम् । पूर्वाषाढाचाषाढाच ॥

पूर्वाह्णः । पुं० द्विधाविभक्तदिनस्य पूर्वभागे ॥ यथा । आवर्तनात्तुपूर्वाह्णोह्यपराह्णस्ततः परः । आवर्तनात्‌वासरस्यच्छायापरिवर्तनात्प्रागितिशेषः ॥ त्रिधाविभक्तदिनस्यप्रथमभागे ॥ सचत्रिंमुहूर्तदिनमानेसूर्योदयावधिदशदण्डात्मकः कालः यथा । पूर्वाह्णेवैदेवानां मध्यंदिनंमनुष्याणामपराह्णः पितृणामितिश्रुतिः ॥ अह्नः पूर्वम् । पूर्वापराधरोत्तरमेकदेशिसमासः । राजाहः सखिभ्यष्टजितिटच् । अह्नादेशोणत्वम् ॥

पूर्वाह्णेतनम् । त्रि० पौर्वाह्णिके ॥ पूर्वाह्णेभवः । विभाषापूर्वाह्णापराह्णाभ्याम्‌इतिट्युट्युलौतुट्च । घकालतनेष्विस्यलुक् ॥

पूर्वेद्युः । अ० प्रातःकाले । धर्मवासरे ॥ पूर्वस्मिन्नहनि ॥ सद्यःपरुदित्यादिनापूर्वशब्दादेद्युस्प्रत्ययो निपात्यते ॥

पूषः । पुं० ब्रह्मदारुणि । तूत० इ० भा० ॥ पूषवडो । इगुपधात्कः ॥

पूषकः । पुं० ब्रह्मदारुणि ॥ पूषएव कः ॥

पूषा । पुं० सूर्ये ॥ जगतः पोषणात् । पुष्णाति । पुषपुष्टौ । श्वन्नुक्षन्पूषन्प्लीहन्निति निपातितः ॥

पूषभाषा । स्त्री० अमरावत्याम् । इन्द्रनगर्याम् । सुरपुर्याम् ॥

पूषसुहृत् । पुं० शिवे ॥

पूषा । स्त्री० पिङ्गलापृष्ठवर्त्तिन्यांनाड्याम् ॥ पूषातुपिङ्गलापृष्ठे नीलजीमूतसन्निभा । याम्यभागस्यनेत्रान्तमायावत्पादतलंगता ॥

पृक्का । स्त्री० मदजालायाम् । पिशुनायामोषधौ । असारक० इ० भा० । सिर्ति० इ० गौ० भा० स्पृक्का । स्पृशत्यङ्गैः । वा० सन् । पृ० ॥

पृक्तम् । न० धने ॥ त्रि० मिश्रिते ॥ सम्पर्कयुक्ते ॥ पृच्यते । पृची० । क्तः ॥

पृक्तिः । स्त्री० सम्पर्के । स्पृष्टौ । स्पर्श[illegible]र्शनम् । पृचीसम्पर्के । क्तिन् ।

पृ[illegible] [illegible]ी० अनुयोगे । प्रश्ने ॥ प्रच्छ[illegible] प्रच्छज्ञीप्सायाम् । गुरोश्चहलः । सम्प्रसारणम् ॥

पृच्छितनुः । पुं० प्रश्नलग्ने ॥

पृच्छ्यम् । त्रि० प्रष्टव्ये ॥

पृतना । स्त्री० सेनामात्रे ॥ सेनाविशेषे । तिसृषुवाहिनीषु ॥ यत्रेभाः ॥ २४३ । रथाः ॥ २४३ । अश्वाः ॥ ७२९ । पादातिकाः ॥ १२१५ । समस्तसङ्ख्ययाचचतुर्विंशतिभिः स्मृता । २४३० ॥ प्रियते । पृथ्व्या-

यामे । वा० तनः गुणाभावश्च ॥
पृतनाषाट् । पुं० इन्द्रे ॥ पृतनांसहते । षहमर्षणे । छन्दसिसहइति० णिव : सहेरितिषः ॥
पृथक् । अ० भिन्ने । विनार्थे । अन्तरेण । ऋते ॥ असङ्कीर्णे ॥ नानार्थे ॥ पर्थयति । पृथप्रक्षेपे । वा० कक् ॥
पृथक्त्वम् । न० पृथक्प्रत्ययासाधारणकारणत्वे ॥ यथा । सङ्ख्यावच्चपृथक्त्वं स्यात्पृथक्प्रत्ययकारणम् । अन्योन्याभावतोनास्य चरितार्थत्वमुच्यते ॥ अस्मात्पृथगियंनेतिप्रतीतिर्हिविलक्षणा॥ पृथक्त्वं निरूपयति सङ्ख्यावदिति । पृथक्प्रत्ययासाधारणकारणंपृथक्त्वम् । तन्निस्वतादिकंसंख्यावत् । यथानित्यं पृथक्त्वं नित्यम् ० अनित्ये त्वनित्यम् ० आश्रयद्वितीयक्षणेचोत्पद्य ... यना-शान्नश्यति ० तथापृथक्त्वमो ... द्वि वत्द्विपृथक्त्वादिकमपीत्यर्थः ... ष्ठो मादेयविवेके ॥ भेदे ॥ भावेस्त्व : ॥ पृथग्भावे । परस्परभिन्नत्त्वे ॥
पृथक्त्वचा । स्त्री० मूर्वायाम् । कर्क-रीला० इ० भा० । देव्याम् । मधुरसायाम् ॥ पृथक्त्वचायस्याः ॥
पृथक्पर्णी । स्त्री० पृश्निपर्ण्याम् । चित्रपर्ण्याम् । पीठवनी० इ० भा० । चाकुल्या० इ० भा० ॥ पृथक्असम्पर्णमस्याः । पाककर्णेतिङीष् ॥

पृथगात्मता । स्त्री० विवेके ॥ व्यक्तौ ॥ पृथगात्मायस्य । तस्यभावः । तल् । तलन्तंस्त्रियाम् ॥
पृथगात्मिका । स्त्री० व्यक्तौ ॥
पृथग्जनः । पुं० मूर्खे ॥ नीचे । अधमे ॥ पृथक्कार्यीजनः असभ्यत्वात्पृथग्जनः । शाकपार्थिवादिः ॥ सज्जनेभ्यः पृथग्भूतोजनोवा ॥ त्रि० पापिनि ॥ भिन्नलोके ॥
पृथग्रूपः । त्रि० बहुविधे ॥ पृथग्रूपमस्य ॥
पृथग्वर्त्मात्मा । पुं० वायौ ॥ पृथक्-नानाविधंवर्त्म सञ्चरणमात्मास्वभावोऽस्य ॥
पृथग्वादः । पुं० दैतिनि ॥ पृथक् नानावस्तु० इत्यं वदनंयस्य ॥
पृथग्विधः । त्रि० नानारूपे ॥ पृथक् धर्माधर्मादिसाधनवैचित्र्येण० परस्परविलक्षणाविधायस्य ॥
पृथग्बीजः । पुं० भल्लातके ।
पृथक् । भिन्ने । विलक्षणे ॥ प्रथयति । प्रथ० ॥ प्रथः कित्सम्प्रसारणञ्च अजि : ॥
पृथवी । स्त्री० भुवि । पृथिव्याम् ॥ प्रथते । प्रथविस्तारे । प्रथेः षवन् सम्प्रसारणञ्चेत्यंके । षित्वान्ङीप् ॥
पृथा । स्त्री० कुन्त्याम् । वसुदेवस्वसरि । पाण्डोः पत्न्याम् ॥
पृथाजः । पुं० कुन्तीपुत्रे । युधिष्ठि

स्त्रीसादौ ॥ पृथायाः पृथायांवा जातः जनी० । डः ॥ अर्जुनपादपे ॥

पृथापतिः । पुं० पाण्डुनृपे ॥ पृथायाःपतिः ॥

पृथिका । स्त्री० शतपद्याम् ॥

पृथिवी । स्त्री० गोत्राद्याम् । क्ष्मायाम् । भूमौ । शब्दस्पर्शरूपरसतन्मात्रसहिताद्गन्धतन्मात्रादुत्पन्नायांशब्दस्पर्शरूपरसगन्धगुणायाम् ॥ पृथिवीपञ्चमंभूतंघ्राणंआध्यात्ममुच्यते । अधिभूतंतथागन्धोवायुस्तत्राधिदैवतम् ॥ न्यायमतेनपृथिवींविभजते । गन्धवतीपृथिवी । साद्विधा । नित्याऽनित्याच । नित्यापरमाणुरूपा । अनित्याकार्यरूपा । पुनस्त्रिविधा । शरीरेन्द्रियविषयभेदात् । शरीरमस्मदादीनाम् । इन्द्रियंगन्धग्राहकंघ्राणंनासाग्रवर्ति । विषयोमृत्पाषाणादिः । इति ॥ प्रथते । प्रथविस्तारे । प्रथेःषिवन्सम्प्रसारणञ्च । षित्वान्ङीष् ॥ प्राणप्रदानात्सपृथुर्यस्माद्भूमेरभूत्पिता । ततस्तुपृथिवींसंज्ञामवापाखिलधारिणी ॥ गन्धोघ्राणेन्द्रियञ्चापिकाठिन्यंगौरवंतथा । वसुन्धरागुणाएतेगदितावेदिभिः ॥ रविचन्द्रमसोर्यावन्मयूखैरवभास्यते । ससमुद्रसरित्शैलातावतीपृथिवीस्मृता ॥

पृथिवीक्षित् । पुं० राजनि ॥ पृथिव्यांक्षयतिवसति । क्षि० । क्विप् । तुक् ॥

पृथिवीगीता । स्त्री० विष्णुपुराणोक्तपृथिवीकथायाम् ॥

पृथिवीतीर्थम् । न० तीर्थविशेषे ॥

पृथिवीपतिः । पुं० भूपाले ॥ पृथिव्याःपतिः ॥ नाऋषिःकुरुतेकाव्यंनारुद्रोरुद्रमर्चति । नादेवांशोददात्यन्नंनाविष्णुःपृथिवीपतिः ॥ ऋषभाख्यौषधे ॥ कृतान्ते ॥

पृथिवीपालः । पुं० राज्ञि ॥

पृथिवीशक्रः । पुं० राजनि ॥

पृथुः । पुं० अग्नौ । त्रेतायुगेसूर्यवंशीयपञ्चमनृपे । वेणनृपस्यदक्षिणकरमथनाज्जाते । प्रजारञ्जनादादिराजोपाधिंप्राप्ते ॥ पृथते । प्रथप्रख्याने । प्रथिम्रदीतिकुःसम्प्रसारणञ्च ॥ श्योनाकवि० ॥ स्त्री० त्वक्पत्र्याम् । हिङ्गुपत्र्याम् ॥ कृष्णजीरके अहिफेने० । त्रि० । महति । विस्तीर्णे ॥ स्थूले ॥ निपुणे ॥

पृथुकः । पुं० चिपिटे । चिउडा० इ० भा० ॥ यथा । शालयःसतुषाआर्द्राभृष्टाअस्फुटितास्ततः । कुट्टिताश्चिपिटाःप्रोक्तास्तेस्मृताःपृथुकाअपि ॥ पृथुकागुरवोवातनाशनाःश्लेष्मलाअपि । सक्षीरावृंहणावृष्याबल्याभिन्नमलाश्चते ॥ पृथु

पृदाकुः । पुं० वृश्चिके ॥ व्याघ्रे ॥ सर्पे ॥ चित्रके ॥ पर्द्दते । पर्द्द० । पर्द्देर्नित्संप्रसारणमल्लोपश्चेतिकाकुप्रत्ययः ॥

पृश्निः । स्त्री० रश्मौ ॥ त्रि० अल्पतनौ ॥ स्पृशति स्पृश्यतेवा । स्पृश संस्पर्शे । घृणिपृश्नीतिसाधुः ॥ पृच्छति० पृच्छ्यतेवा । पर्षति० पृष्यतेवा । प्रच्छज्ञीप्सायाम् । पृषुसेचने वा । पूर्ववत्साधुः ॥

पृश्निका । स्त्री० कुम्भिकायाम् ॥

पृश्निगर्भः । पुं० गदाग्रजे । श्रीकृष्णे ॥

पृश्निपर्णी । स्त्री० पृथक्पर्ण्याम् । अङ्घ्रिवल्लिकायाम् । चक्रीत्० ह० पिठवनि० ह० च० भा० । चाकुलिया० ह० गौ० भा० ॥ पृश्निपर्णीत्रिदोषघ्नीवृष्योष्णामधुरासरा । हन्तिदाहज्वरश्वासरक्तातीसारतृड्वमीः ॥ पृश्निरल्पंपर्णमस्याः । पाककर्णेतिङीष् ॥

पृश्निभद्रः । पुं० श्रीकृष्णे ॥

पृश्निशृङ्गः । पुं० विष्णौ ॥ गणेशे ॥

पृश्नी । स्त्री० वारिपर्ण्याम् ॥

पृषत् । पुं० मृगे ॥ न० विन्दौ ॥ त्रि० श्वेतविन्दुयुक्ते ॥ पर्षति । पृषुसेचने । वर्त्तमानेपृषद्बृहन्महदिति अतिप्रत्ययोगुणाभावश्चनिपात्यते । शतृवदस्यकार्यम् ॥

पृषतः । पुं० पृषाकमृगे । चित्रमृगे ॥ यथा । पृषतश्चन्द्रविन्दुःस्यात्ङरिणः कथितोऽल्पकः ॥ पृषतस्तुभवेत्स्वादुर्ग्राहकःशीतलोलघुः । दीपनोरोचनः श्वासज्वरदोषत्रयास्रजित् ॥ इति ॥ विन्दौ ॥ त्रि० श्वेतविन्दुयुक्ते ॥ पर्षति । पृषु० । पृषिरञ्जिभ्यांकिदित्यतच् ॥ यद्वा । पृषताः विन्दवः सन्त्यस्य । अर्शआद्यच् ॥

पृषताम्पतिः । पुं० वायौ ॥

पृषताश्वः । पुं० वायौ । अनिले ॥ पृषतोमृगविशेषोऽश्वोवाहनमस्य ॥

पृषती । स्त्री० मृग्याम् ॥

पृषत्कः । पुं० वाणे । शरे ॥ पर्षति पृषु० । लटः शतृ । संज्ञापूर्वकत्वान्नगुणः ॥ यद्वा । वर्त्तमाने पृषन्महद्दितिसाधुः स्वार्थेकन् ॥

पृषदश्वः । पुं० गन्धवहे । पवने । वायौ ॥ पृषन्मृगभेदोऽश्वोवाहनमस्य ॥ पृषतामम्बुकणानामश्ववद्वेतिवा ॥

पृषदाज्यम् । न० सदध्याज्ये । दधिमिश्रितघृते ॥ पृषच्चतदाज्यञ्च ॥ यद्वा । पृषद्भिः सहितमाज्यम् ॥

पृषद्वलः । पुं० वायुभ्वे ॥

पृषन्तिः । पुं० विन्दौ ॥ यथा । पयः पृषन्तिभिः स्पृष्टावान्तिवाताः शनैः शनैरितिजाम्बवतीविजयकाव्यम् ॥

पृषभाषा । स्त्री० इन्द्रपुर्याम् ॥

पृषाकारा । स्त्री० क्षुद्राश्मनि । वट खराङ्गभा० ॥

पृषातकम् । न० सदध्याज्ये ॥

पृष्टम् । न० सामगानांमाध्यन्दिन सवनेगीयमानस्तोत्राणांनामधेये ॥ त्रि० कृतप्रश्ने । उपामन्त्रिते ॥ पृच्छे: क्त: ॥

पृष्टव्य : । त्रि० जिज्ञासिते ॥

पृष्ठम् । न० शरीरपश्चाद्भागे । पार्श्व स्थाने । पीठ० इ० भा० ॥ अश्वशु भाशुभलक्षणंयथा । सुस्निग्धं मांस लंपृष्ठमभग्नञ्चाप्यरोमशम् । सध नानांविपर्यस्तं जिह्वनानांप्रकीर्त्ति तमितिसमुद्र : ॥ चरममात्रे ॥ पृष्यते । पृषु० । तिथपृष्ठगूर्थेति साधु ॥ स्तोत्रविशेषेपिपृष्ठम्० त्रि वाधिकरणे० पृष्ठै: स्तुवतइत्यादौ तथानिर्णयात् ॥

पृष्ठग्रन्थि : । पुं० गडौ । कूब० इ० भा० ॥

पृष्ठत : । अ० पश्चात् । पृष्ठदेशे ॥ पृष्ठ इति । आद्यादित्वात्तसि: ॥

पृष्ठदृष्टि : । पुं० भल्लूके ॥

पृष्ठमांसाद : । त्रि० परोक्षे दोषाभि धायिनि ॥ वाक्याभिधायिनि ॥ इ० त्रिकाण्डशेष : ॥

पृष्ठमांसादनम् । न० परोक्षे दोषकी र्त्तने ॥ त्रि० तद्वति ॥

पृष्ठवंश : । पुं० रीढके । पृष्ठास्थि नि ॥ सतुगर्भेमासद्वये संभवति ॥

पृष्ठवह : । पुं० पृष्ठ्याश्वे ॥

पृष्ठवास्तु । न० गृहस्योपरिगृहे ॥

पृष्ठवाट्० ड् । पुं० युगपार्श्वगवृषे । पष्ठवाहिनि ॥

पृष्ठवाह : । पुं०
पृष्ठवाहक : । पुं० } वृषे ॥

पृष्ठवाह्य : । पुं० भारवाहकवृषे । स्थौरिणि । पृष्ठ्ये ॥

पृष्ठशृङ्ग : । पुं० वनच्छागे ॥

पृष्ठशृङ्गी ० पु शभीरौ । सैरिभे ॥ शंढे । भीमसेने । वृकोदरे ॥

पृष्ठहायन : । पुं० धान्यविशेषे ॥ मत ङ्गजे ॥

पृष्ठी । पुं० मत्स्यविशेषे ॥

पृष्ठोदय : । पुं० राशिविशेषे ॥ मेषो- वृष:कर्कटश्चधनुर्मकरएवच । पृष्ठो- दया : षडेवैतेमीनश्चापितथैवच ॥

पृष्ठ्य : । पुं० स्थौरिणि । पृष्ठेनभारवह नशीलेघोटके । न० पृष्ठवृन्दे ॥ य- ज्ञविषयेऽद : स्मरन्ति ॥ पृष्ठानांस मूह : । पृष्ठाद्यन् ॥ प्रशस्तमतिश यितंपृष्ठमस्य । अन्यस्योपीतियद्वा

पृष्णि : । पुं० सूर्ये ॥

पृष्णिका
पृष्णी । स्त्री० } कत्तृणे । कुम्भ्या म् ॥

पेचक : । पुं० उलूके । वायसारातौ । कौशिके ॥ यूके ॥ गजलाङ्गूल मूले । तद्गुदाच्छादकमांसपिण्डवि

शेषे ॥ पचति॰पच्यतेवा॰दुःखेर्व न। डुपचष्॰ ॥ पचिमच्योरिच्चो-पधायाइतिवुन्। अतइत्त्वम्। पु गन्तेतिगुणःपर्यङ्के॰ मेघे॰। यूके ॥

पेचकी। पुं॰ हस्तिनि ॥

पेचिलः। पुं॰ गजे। हस्तिनि ॥

पेचु। न॰ पेचुल्याम् ॥

पेचुकम्। न॰ नाडीचशाके। पेचुल्या म्॥ त्रिकाण्डशेषेकेचुकमितिपाठः

पेचुली। स्त्री॰ पेचुनि। नाडीचशाके

पेटः। पुं॰ प्रहस्ते। पेटति। पिट॰ । प॰ अच् ॥

पेटकः। पुं॰ न॰ पिटके। पुस्तका दीनांमञ्जूषायाम्। पिटार॰ इ॰ भा॰ ॥ त्रि॰ कदम्बके। समूहे ॥ पेटति। पिटशब्दसंघातयोः। ण्वुल् ॥

पेटाकः। पुं॰ पेडायाम्। पेटके ॥

पेटिका। स्त्री॰ वृक्षविशेषे॰। कुवेरा च्याम्। कणावल्लिकायाम् ॥

पेटी। त्रि॰ पेटके ॥

पेडा। स्त्री॰ पेटके। मञ्जूषायाम्। वृहत्पिटाके ॥ पिण्डते। पिडिसं-घाते। प॰ अच्। अनित्यत्वान्नमु म् ॥

पेत्वम्। न॰ अमृते ॥ घृते ॥ पीयते। पा॰। अन्येभ्योपिदृश्यतइति॰ इत्वन् ॥

पिपीयमानः। त्रि॰ अत्यासक्त्यापीय-माने ॥

पेयम्। न॰ पयसि। जले ॥ दुग्धे ॥ मद्ये ॥ अष्टविधान्नान्तर्गतान्नवि॰। यथा। भोज्यंपेयंतथाचूष्यंलेह्यंखाद्यंच चर्वणम्। निर्पेयमष्टधाप्रोक्तमा ....... न्नमष्टविधंस्मृतम् ॥ इ॰ रा॰ नि॰ ॥ त्रि॰ पानयोग्यद्रव्ये। पातव्ये ॥ पातुंयोग्यम्। पा॰। यत्। ईद्यति । गुणः ॥

पेया। स्त्री॰ आणायाम्॥ अच्छमण्डे ॥ सिक्थसमन्वितपेयद्रव्ये ॥ पेया विधिर्गुणाश्च। चतुर्दशगुणेनीरेरक्त शाल्यादिभिः कृता। द्रवाधिका-स्वल्पसिक्थापेयाप्रोक्ताभिषग्वरैः ॥ सातिलघ्वीग्राहिणीचधातुपुष्टिविधा यिनी ॥ स्वेदाग्निजननीचैयावात-वर्चोनुलोमिनी। क्षुत्तृड्श्रमग्लानिहरीसंधवसंयु क्तादीपनीपाचनीचसा ॥ आमशूल हरीरुच्याज्वरादिबन्धविनाशिनी ॥ पातुंयोग्या। पा॰। यत्। ईद्यति । टाप् ॥

पेयूषः। पुं॰ न॰ अमृते। नव्यदु-ग्धे। सप्तदिवसावधिक्षीरे ॥ आस प्रसवप्रभवंक्षीरंपेयूषउच्यते ॥ पीय ते॰पीय्यतेऽनेनवा। पीयइतिसौ त्रोधातुः प्रीतौ। पीयेरूषन्। बहु लवचनात्पक्षेगुणः ॥ अग्निसंयो-गात्कठिनतांगतेनवप्रसूतायाःगोः क्षीरे ॥ क्षीरंतत्कालसूतायाघनं-

पेयूषमुच्यते ॥ नव्यघृते ॥

पेरु : । पुं० सूर्ये ॥ वह्नौ ॥ समुद्रे ॥ पीयते । पीङ्पाने । निपीभ्यां रु : ॥

पेरोजम् । न० उपरत्नवि० । पेरूजे । पिरोजा० इ० भा० ॥ तद्गुणविषयम् । भस्माङ्कहरितश्च । तस्यगुणा : । पेरोजंसुकषायंस्यान्मधुरंदीपनंपरम् । स्थावरंजंगमञ्चैवसंयोगाच्चयथाविषम् ॥ ततसर्वंनाशयेच्छीघ्रंशूलंभूतादिदोषजम् । पाठान्तरम् यथा ॥ पेरोजंसुकषायंस्यान्मधुरंदीपनंतथो: । स्थावरादिविषघ्नंस्याद्रत्नञ्चापरंशुभु ॥ शीताङ्गंनाशयेच्छीघ्रंशूलंत्रिनिरमूलजम् ॥ इ० रा० नि० ॥

पेलम् । न० अण्डकोषे ॥

पेलवम् । त्रि० विरले ॥ अत्रतालव्यशत्वप्रकार : ॥ पेलनम् । पिलक्षेपे । घञ् । पेलोस्याप्ति । अन्येभ्योपीतिव : ॥ कोमले कृशे ॥

पेरलि : । स्त्री० नृत्यविशेषे ॥ यथा । ताण्डवञ्चतथालास्यंद्विविधंनृत्यमुच्यते । पेरलिर्बहुरूपाचताण्डवंद्विविधंमतम् ॥ अङ्गविक्षेपबाहुल्यंतथाभिनयशून्यता । यत्रसापेरलिस्तस्या : संज्ञादेशीतिलोकत : ॥ छेदनंभेदनंयत्रबहुरूपामुखावली ॥ ताण्डवंबहुरूपन्तद्दाक्षागमसमुद्गतमिति ॥

पेशलम् । न० सौकुमार्ये ॥ त्रि० रुचिरे । रम्ये । चारौ । सुन्दरे ॥ दक्षे । कुशले । चतुरे ॥ कोमले ॥ पिशअवयवे । भाविवञ् । पेशंलाति । ला० । क : ॥ वा० पिशिरलज्वा ॥ पेशोस्यास्ति । सिध्मादित्वालज्वा ॥ धूर्ते । कर्णाजनसावाचावपुषाचशोभनत्वात् । पेशलोविष्णुर्वासुदेव : ॥ तथाविधोन्योपि ॥

पेश : । न० रूपे ॥

पेशस्कृत् । पुं० हस्ते ॥ कीटवि० । किमिरवी० इ० गौ० भा० ॥

पेशि : । पुं० शलकोटौ । वज्रे ॥ स्त्री० अण्डे ॥ पिशिअवयवे । कृपिमिरुहिपतीत्यादिना० इन् ॥ मांसपिण्डे ॥

पेशी । स्त्री० सुपक्वकलिके ॥ मांसपिण्डे ॥ अण्डभेदे ॥ कृदिकारादक्तिनइतिङीष् । गौरादिर्वा ॥ पिशाच्याम् ॥ राक्षसीभेदे ॥ नदीविशेषे ॥

पेशीकोष : । पुं० पक्षिडिम्बे, अण्डे ॥ पेशीनांमांसखण्डानां कोषोभाण्डागारइतिस्वामी ॥

पेषणम् । न० चूर्णने । पिष्लृसंचूर्णने भावेल्युट् ॥ खले ॥ स्नुहीद्रुमे ॥

पेषणि : । स्त्री० ⎫ पेषणशिलायाम् ।
पेषणी : । ⎭ दृषदुपलात्मि-

कायाम् । पट्टे । गृहकच्छपे । सि ल० द्रु० भा० ॥

पैंगल : । त्रि० पिंगले ॥

पैणाक : । पुं० पेषणाम् ॥

पैजूष : । पुं० कर्णे ॥

पैठर : । त्रि० उख्ये । स्थालीपक्वमांसादौ ॥ पिठरेसंस्कृतम् । संस्कृतंभक्षा इत्यण् ॥

पैठीनसि : । पुं० स्मृतिकारकेमुनि विशेषे ॥

पैण्डिन्यम् : न० भैक्षजीविकायाम् ॥

पैतामह । त्रि० पित्र्ये । पितामह सम्बन्धिधनादौ ॥ पितामहस्येदम् । तस्येदमित्यण् ॥ स्त्रियांपैतामही

पैतृक । त्रि० पितृसम्बन्धिनिधनादौ ॥ सुश्रिणीत्रीवंशियमसदेश : खलुपैतृक : ॥ पितुरागतम् । पितुर्यच्चे तिचकाराट्ठञ् ॥ स्त्रीदि०पैतृकीवि द्या ॥

पैतृकभूमि:स्त्री०।पितृसम्बन्धिस्थाने॥

पैतृष्वसेय : । त्रि० पितुर्भगिनीसन्तौ॥ पितृष्वसुरपत्यम् । ढकिलोप: । अतएवज्ञापकाड्ढक् ॥ स्त्रियांपैतृष्वसेयी ॥

पैतृष्वस्रीय : । त्रि० पितुर्भागिनेये । पैतृष्वसेये ॥ पितृष्वसुरपत्यम् । पितृष्वसुश्छण् ॥

पैत्त : । त्रि० पैत्तिके ॥

पैत्तिकम् । त्रि० पित्तजव्याधौ । पित्तसम्बन्धे ॥ पित्तस्यशमनंकोपनंवा वातपित्तश्लेष्मभ्य : शमनकोपनयो रितिठञ् ॥

पैत्रम् । न० पितृतीर्थे । तर्ज्जन्यंगुष्ठयो र्मध्ये ॥ पितृणामिदम् । तस्येद मित्यण् ॥ त्रि० पितृसम्बन्धिनि ॥

पैत्राहोरात्र : । पुं० पितृलोकस्यदि वारात्रौ । न्र्णामासि ॥ कृष्णपक्ष : पितृणांदिनम्०शुक्लपक्षोरात्रि : । पितृणामयम्०पैत्र : । पैत्रश्चासा वहोरात्रश्च ॥

पैत्र्य : । पुं० दैवसर्गप्रभेदे ॥

पैप्पलम् । त्रि० पिप्पलकाण्डे ॥ पिप्पलभस्मनि ॥ पिप्पलस्यावयवोवि कारोवा । अवयवेचेत्यण् ॥

पैल : । पुं० ऋषिविशेषे । ऋग्वेदधा रकेव्यासशिष्ये ॥ पीलायाअपत्यम् । पीलायावेत्यण् ॥

पैलेय : । पुं० पैले ॥ पीलायाअपत्य म् । अणभावे० द्व्यच इति० ढक् ॥

पैशाच : । पुं० अष्टप्रकारविवाहान्त र्गताष्टमविवाहे ॥ पैशाच : कन्य-कांछलात् । छलमाहमनु : । सुप्तां मत्तांप्रमत्तांवारहोयत्रोपगच्छति । सपापिष्ठोविवाहानांपैशाचश्चाष्टमो धम : ॥ पिशाचस्येवायम् । अण् ॥ पिशाचएववा । स्वार्थिक : प्रज्ञाद्य ण् ॥ दैवसर्गविशेषे ॥ त्रि० पिशाच सम्बन्धिनि ॥

वृकी ॥

पोली । स्त्री० पिष्टकविशेषे । पूपाख्यान्न । चपट्याम् ॥

पोष : । पुं० पोषणे ॥

पोषक : । त्रि० पालनकर्त्तरि ॥

पोषणम् । न० पुष्टौ । पुषपुष्टौ ॥ ल्युट् ॥ धृतौ ॥

पोषयित्नु : । पुं० कोकिले ॥ भर्त्तरि ॥ त्रिषु ॥ त्रि० पोषके । पोषणकर्त्तरि ॥ पोषयति । पुष० । स्तनिहृषिपुषीत्यादिना० इत्नुच् ॥

पोष्टा । पुं० पूतीके । काँटाकरञ्ज० इ० गौ० भा० ॥ त्रि० पोषणकर्त्तरि ॥ पुष्णाति । पुष० । तृच् ॥

पोष्टृवर : । त्रि० पोषकश्रेष्ठे ॥

पोष्य : । त्रि० प्रतिपाल्ये । पोषणीये । अवश्यपालनीये पोष्यवर्गे ॥

पोष्यपुत्र : । पुं० पुत्रप्रतिनिधौ पालनात्पुत्रत्वं प्राप्ते ॥

पोष्यवर्ग : । पुं० परिजने । प्रतिपालनीयगणे ॥ यथा मातापितागुरु : पत्नीत्यपत्यानिसमाश्रिता : । अभ्यागतोऽतिथिश्चाग्नि : पोष्यवर्गाअमीनव ॥

अपिच । मातापितागुरुर्भ्राताप्रजा: दीना : समाश्रिता : । अभ्यागतोऽतिथिश्चाग्नि : पोष्यवर्गउदाहृत : ॥ भरणंपोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् । नरकंपीडनेचास्यतस्माद्यत्नेन तंभवेत् ॥ पोष्याजीवि : ॥

पौंसवनम् । न० पुंसवनसंस्कारे ॥

पौंस्नम् । न० पुंस्त्वे ॥ पुंसइदम् । स्त्रीपुंसाभ्यांनञ्स्नञौ भवनादिति स्नञ् ॥ त्रि० पुंसम्बन्धे ॥ स्त्रियांपौंस्नी ॥

पौगण्डम् । न० पञ्चमाब्दादारभ्यदशमाब्दपर्य्यन्तावस्थायाम् ॥ यथा । कौमारंपञ्चमाब्दान्तंपौगण्डंदशमावधि । कैशोरमापञ्चदशाद्यौवनन्तुतत : परमिति ॥ आचार्यप्रमुखानांहिपौल : पौल्येनर्तनेलौ । ततो गण्डावस्थितेनपौगण्ड : सम्भूतोयु वैरित्युक्तो सद्भवस्थानति । त्रि० ॥

पौण्डरीकम् । न० प्रपौण्डरीके ॥ पुण्डरीकमिव । शर्करादिभ्योऽण् ॥

पौण्डर्यम् । न० ओषधीभेदे । स्थलपद्मे । प्रपौण्डरीके ॥ पौण्डर्यंमधुरं तिक्तंकषायंशुक्रलंहिमम् । चक्षुष्यं मधुरंपाकेवर्ण्यंपित्तकफापहम् ॥

पौण्ड्र : । पुं० चंद्रवी० इ० प्र० देशे ॥ भीमसेनस्यशङ्खे ॥ पौंडा० इ० प्र० इक्षुविशेषे ॥ पुण्ड्राणि । पुडिखण्डने । स्फायीतिरक् । प्रज्ञाद्यण् ॥

पौण्ड्रक : । पुं० श्वेतपौंडा० इ० प्र० इक्षौ ॥ वातपित्तप्रशमनोमधुरोरसपाकयो : । सुशीतोबृंहणोबल्य : पौण्ड्रकोभीरुकस्तथा ॥ पौण्ड्रदेशो

इत्येआदौ च्चियै पश्चाद्विहितक्रिया लोपादिनाद्युदृस्वत्वमापन्नं दस्युपदवा च्यं जात्यन्तरे ॥ शौण्डिकायामृवे- श्याज्जातिजातिवि० । पुंडी० द्रु० गौ० भा० ॥ पुण्ड्र एव । स्वा० कन् ॥

पौण्ड्रवर्द्धन : । पुं० देशवि० । विहा र० द्रु० भा० ॥

पौण्ड्रिक : । पुं० पुण्ड्रेक्षौ । सेव्ये । अतिरसे ॥

पौतिमाष्य : । पुं० वेदप्रसिद्धेऋषिवि शेषे ॥ पूतिमाषस्यगोत्रापत्यम् । गर्गादिभ्योयञ् ॥

पौत्तिकम् । न० घृतवर्णेमधुनि ॥ या कृष्णामशकोपमालघुतरा : प्रायो- महापिण्डिकावल्गनास्तरुकोटरा- न्तर्गता : पुष्पासवंकुर्वते । तास्ताज् दैरिहपुत्तिकानिगदितस्ताभि:कृतं सर्पिषातुल्यं यन्मधुतद्वनेचरजनै : संकीर्तितंपौत्तिकम् ॥ पौत्तिकंमधु रूक्षोष्णं पित्तदाहास्रवातकृत् । वि दाहिमेहकृच्छ्रघ्नं ग्रन्थ्यादिक्षतशो- षिषु ॥ पुत्तिकाभि : कृतम् । संज्ञा यामित्यण् ॥

पौत्र : । पुं० पुत्रस्यपुत्रे । नप्तरि । पोता० द्रु० नाती द्रु० सा० ॥ पु- त्रस्य०पुत्यास्यापत्यम् । अनृष्यानन्त र्येविदादिभ्योऽञ् ॥ न० पोतुर्भाव कर्मणो : ॥ उद्० अञ् ॥

पौत्रिकेय : । त्रि० पुत्रिकातनये ॥

पौत्री । स्त्री० पुत्रसुतायाम् । नप्त्या म् ॥ पुत्रस्यपुत्र्याश्चस्त्र्यपत्यम् । अजन्तत्वान्ङीप् ॥

पौन : । पुनिक : त्रि० पुन : पुनर्भ वे ॥ कालाट्ठञ् ॥

पौन : पुन्यम् । न० आभीक्ष्ण्ये । पु- न : पुनरित्यस्मिन्नर्थे ॥ पुन:पुनरि त्यस्यभाव : । ष्यञ् । अव्ययानांभ मात्रेटिलोपस्य०प्रातिपदिकात्वय उपसंख्यानमितिटिलोप : ॥

पौनरुक्तिक : । पुं० पुनरुक्तमधीयाने ॥ उ० ठक् ॥

पौनर्नवम् । न० पुनर्नवाशाके ॥

पौनर्भव : । पुं० द्वादशविधपुत्रान्तर्ग- तपुत्रवि० । पुनर्भूपुत्रे ॥ अपत्येर्थे ऽण् ॥ यापत्यावापरित्यक्ताविधवावा स्वयेच्छया । उत्पादयेत्पुनर्भूत्वास- पौनर्भवउच्यते ॥

पौरम् । न० कतृणे । रौहिषतृणे । रा मकर्पूर० द्रु० ख्याते ॥ त्रि० नागरे । पुरोद्भूते ॥ पुरेभवम् । तत्रभवइ त्यण् ॥

पौरक : । पुं० गृहबाह्योपवने ॥ नि- ष्कुटस्तुगृहारामोबाह्यारामस्तुपौर क : ॥ इतिहेमचन्द्र : ॥

पौरन्दर : । पुं० पुरन्दरापत्ये ॥ त्रि० पुरन्दरसम्बन्धिनि ॥ अण् ॥

पौरन्दरी । स्त्री०पुरन्दराधिष्ठितदिशि

पौरव : । पुं० दुष्यन्तनृपतौ ॥ पूरोरप

त्यम् । पूरोरण् ॥ पुरुवंशे ॥ य० । द्रुह्योस्तुतनयाभोजा अनोस्तुम्लेच्छजातयः । पुरोस्तुपौरवोवंशोयत्रजातोसिपार्थिवेतिमात्स्ये ३४ऽध्यायः ॥

पौरस्त्यः । त्रि० प्रथमे ॥ पुरोभवः । दक्षिणापश्चात्पुरसस्त्यक् ॥

पौराणिकः । पुं० पुराणज्ञे ॥ पुराणमधीतेवेदवा । आख्यानाख्यायिकेतिहासपुराणेभ्यश्चेतिठक् ॥ लोकविदि ॥ पौराणिकोनिर्घ्नष्टिर्बालयोः बास्थितिर्वीतत्त्वमित्याह । तल्लक्षणमाख्यानम् । सतोऽसतश्चोत्पत्त्या यथावन्नयगौडपादैर्निर्णीतत्वात् ॥

पौराणिकी । स्त्री० पुराणोक्तायाम् ॥

पौरुषम् । न० पुरुषस्यभावे ॥ पुरुषस्यकर्मणि ॥ पुरुषस्यतेजसि ॥ आत्मसामर्थ्ये । यत्ने । उद्योगे । क्रियाप्युपायेनावश्यमिदंस्यादित्याशीर्लिङ्विधौत्साहरूपेनिर्वेदे ॥ उच्छास्त्रं शास्त्रितञ्चेतिपौरुषंद्विविधंस्मृतम् । तत्रोच्छास्त्रमनर्थायपरमार्थायशास्त्रितम् ॥ उच्छास्त्रं परस्त्रीगमनपरद्रव्यापहारादि । शास्त्रितंनित्यनैमित्तिकानुष्ठानादि । अनर्थोनरकः । अर्थः सुस्वर्गादिषुपरमोर्थोमोक्षः ॥ पुरुषस्यकर्मभावोवा । प्राणभृज्जातीत्यञ् । युवादित्वादण्वा ॥ कोवाहिदैवमेवैकंप्रशंसन्तिनपौरुषम् । दैवंपुरुषकारेणघ्नन्तिशूराः सदोद्यमाः इत्यग्निपुराणम् ॥ त्रि० ऊर्ध्वविस्तृतदोःपाणिनृमाने । पुरुषपरिमाणे । पुरुषा० ड० भा० ॥ दोर्भ्याञ्चपाणिभ्याञ्चततऊर्ध्वविस्तृतदोः पाणियेनसः ताहशोयेनसः ताहशोना० तस्य मानंपरिमाणम् ॥ तेनवापुंसायन्नोयतेतच ॥ पुरुषप्रमाणमस्य पुरुषहस्तिभ्यामण्चेत्यण् ॥ पौरुषोनरः० पौरुषीनदी० पौरुषंसरः ॥

पौरुषेयः । पुं० पुरुषसङ्घे ॥ पुरुषस्यवधे ॥ पुरुषस्यपदान्तरे । पुरुषस्यस्थाने ॥ त्रि० आधुनिके । पुरुषेणकृते ॥ पुरुषस्यविकारे ॥ पुरुषस्यहिते ॥ पुरुषाद्वधविकारसमूहतेनकृतेष्विति पु० सर्वपुरुषाभ्यांणढञावितिठञ् ॥

पौरोगवः । त्रि० पाकशालाध्यक्षे । पुरोगा०ड०भा० ॥ पुरः पूजितागौर्भूमिः पुरोगवी । गोरतद्धितलुकीतिटच् । तस्याअयम् । तस्येदमित्यण् ॥ यद्वा । पुरः प्रथमंयाच्यवस्तुग्रणीर्नेचमस्य०पुरोगुः । गोस्त्रियोरितिह्रस्वः । ततः प्रज्ञाद्यण् ॥

पौरोडाशः । पुं० पुरोडाशे । पिष्टपिण्डे ॥ पुरोडाशएव । स्वार्थेऽण् ॥

पौरोडाशिकः । पुं० पुरोडाशिके ॥ पुरोडाशसहचरितोमन्त्रः-

पुरोडाश : । सएवपौरोडाश : । तस्यव्याख्यानस्तत्रभवोवा । पौरोडाशपुरोडाशात्ष्ठन् ॥

पौरोभाग्यम् । न० पुरोभागिन : कर्म्मणि ॥ ष्यञ् ॥

पौरोहित्यम् । न० पुरोहितस्यकर्म्मभावयो : । पत्यन्तपुरोहितादिभ्यो यक् ॥

पौर्णमासः । पुं० पौर्णमास्यांक्रियमाणे यागविशेषे ॥ पौर्णमास्यांभवः। सन्धिवेलाद्यृतुनक्षत्रेभ्योण् ॥

पौर्णमासी । स्त्री० पूर्णिमायाम् ॥ पूर्णोमासोयस्याम्, बहुव्रीहौकृते० स्वार्थेण् । सास्मिन्पौर्णमासीतिनिर्द्देशात् ॥ यद्वा । पूर्णमासोऽस्यांवर्त्तते० इति । पूर्णमासादण्वक्तव्य : । इत्यण् । ङीप् ॥

पौर्वदेहिकम् । त्रि० पूर्वदेहभवे ॥

पौर्वपदिक : । त्रि० पूर्वपदग्राहिणि। पूर्वपदंगृह्णाति । पदोत्तरपदंगृह्णातीतिठक् ॥

पौर्वापर्यम् न० कार्यकारणभावे ॥ साध्यसाधनभावे ॥

पौर्वाह्णिकम् त्रि० पूर्वाह्णभवः । विभाषापूर्वाह्णापराह्णाभ्यामिति पक्षे ठञ् ॥

पौलस्त्यः । पुं० कुवेरे ॥ रावणे ॥ विभीषणे ॥ पुलस्तेर्गोत्रापत्यम् । गर्गादिभ्योयञ् ॥ बहुत्वे

पुलस्तयः ॥ राक्षसे ॥

पौलिः । पुं० आपक्वे । भर्जितेहरितयवादौ ॥ पोलति । पुलमहत्त्वे । ज्वलादित्वाण्णः । पौलिनिर्वृत्त : । सुतङ्गमादित्वादिञ् ॥

पौलुषिः । पुं० सत्ययज्ञे ॥ पुलुषस्यापत्यम् । इञ् ॥

पौलोमी । स्त्री० इन्द्राण्याम् ॥ पुलोम्नोमुनेरपत्यंस्त्री । तस्यापत्यमित्यण् । गोत्रत्वेनजातित्वान्ङीष्॥

पौष : । पुं० तैषे । सहस्ये । हैमने ॥ तत्रजातफलम् । निगूढमन्त्र : सुक्षणाङ्गयष्टि : परोपकारीपितृविहीन : । काष्टान्वितार्थं व्ययकृद्विधिज्ञ : पौष : प्रसूत : पुरुष : सुधीर : ॥ पौषीपौर्णमास्यस्मिन् । सास्मिन्पौर्णमासीत्यण् ॥ न० महे ॥ युद्धे पुष्ययुक्तेन्हि ॥

पौषी । स्त्री० पुष्ययुक्तपौर्णमास्याम् ॥ पुष्येणयुक्तापौर्णमासी । नक्षत्रेणयुक्त : कालइत्यण् तिष्यपुष्ययोर्नक्षत्राणियलोप : । ङीप् ॥ पुष्ययुक्तायांरात्रौ ॥

पौष्करम् । न० पुष्करमूले ॥ पौष्करंकटुकंतिक्तमुष्णंवातकफज्वरान् । हन्तिशोथ,रुचिश्वासान्विशेषात् पार्श्वशूलनुत् ॥

पौष्करिणी । स्त्री० पुष्करिण्याम् ॥

पौष्टिकम् । न० पुष्ट्युत्पादककर्मणि

॥ चीरसमयेगाच्छादनवस्त्रवि शेषे। कावाड्० ङ्० गौ० आ०॥

पौष्णः। पुं० सूर्यपुत्रे ॥ न० रेवती नक्षत्रे ॥

पौष्पकम्। त्रि० पुष्पनिर्मिते ॥

पौष्कम्। न० धातुप्रभेदे। रीति पुष्पे ॥ पुष्पस्यप्रतिकृति:। इवे प्रतिकृताविति कन्। ततः स्वार्थे० अण् ॥

पौष्पी। स्त्री० पुष्पपुरे। पटना० ङ्० भा० ॥

प्याट्। अ० हे। भो:। सम्बोधने ॥

प्यायते। प्यैङ्वृद्धौ टप्रत्ययः

प्र। अ० प्रकर्षे ॥ गतार्यर्थे ॥ प्रथमादि कर्म दीर्घेभृशसम्भवत्यमिषु। वियो गशुद्धिशक्तीच्छाशान्तिपूजाग्रदर्शने ॥ यथा आदिकर्म खिन्न:० प्रयात: । दीर्घे० प्रवलासूषका:। ईर्ष्या० प्रभुर्दर्शस्य। भृशार्थप्रवर्द्धितदाया दा:। सम्भवे० हिमवतोगङ्गाप्रभ वति। तृप्तौ० प्रभुक्तमन्नम्। वि योगे० प्रोषित: शुद्धौप्रसन्नमुदक म्। शक्तौ० प्रशक्तोविप्राय। इ च्छायाम्० प्रार्थयतेकन्याम्। शान्तौ० प्रशान्तोऽग्नि:। पूजाया म्० प्राञ्जलि: स्थित: अग्रे० प्र वालम्। दर्शने प्रलोकयति। इत्यर्थ: ॥

प्रकट:। त्रि० व्यक्ते। नि:सन्दिग्ध भातीतिव्यवहारगोचरे। स्पष्टे ॥ उद्भूते ॥ सम्भ्रोदर्शीतिप्रशब्दात् स्वार्थेकटच् प्रत्यय:॥

प्रकटित:। त्रि० प्रकाशिते ॥

प्रकटोदितम्। न० विस्पष्टवाक्ये ॥

प्रकण्व:। पुं० देशविशेषे ॥

प्रकथनम्। न० प्रकर्षेणप्रतिपादने ॥ यथागाथा: प्रकुरुते। प्रकथयती त्यर्थ:। गन्धनावक्षेपणेतिप्रकथने आत्मनेपदम् ॥

प्रकम्पन:। पुं० वायौ ॥ नरकविशे षे ॥ न० कम्पातिशये ॥

प्रकर:। पुं० संहतौ। समूहे ॥ विकीर्णकुसुमादिषु। न० जोङ्ग के ॥ प्रकीर्यते कृविक्षेपे। अदो रप् ॥

प्रकरणम्। न० प्रस्तावे ॥ यथा। भोजनप्रकरणे सैन्धवमानयेतिलव णे प्रतीतिगमनप्रकरणे तुल्वश्चे प्रतीतिर्भवतीति ॥ रूपकभेदे। अभिनयप्रकारे ॥विश्रामे॥ ग्रन्थ सन्धौ। ग्रन्थस्यविच्छेदे ॥ तल्लक्षणं यथा। शास्त्रैकदेशसम्बद्धं शास्त्र कार्यान्तरेस्थितम्। आहु: प्रकर णंनामग्रन्थभेदंविपश्चित:॥ अत्र मीमांसका:॥ विनियोगविधि: सहकारिभूतेषुषट्सुप्रमाणेषुचतु र्थंप्रमाणं॥ उभयाकांक्षाप्रकरणम्। यथा। प्रयाजादिषुसमिधोयजती

बदरवल्ली । स्त्री० ) भूबदर्याम् ॥

बदरा । स्त्री० गृष्टी । वराहक्रान्तायामोषधौ ॥ कार्पास्याम् ॥ एलापर्ण्याम् ॥ विष्णुक्रान्तायाम् ॥ टाप् ॥

बदरामलकम् । न० प्राचीनामलके ॥

बदरि : । स्त्री० कोलिवृक्षे ॥

बदरिकम् । न० तीर्थविशेषे ॥

बदरिकाश्रम : । पुं० न० तीर्थविशेषे । नारायणाश्रमे । व्यासाश्रमे ॥

बदरी । स्त्री० कोलवृक्षे ॥ कपिकच्छ्वाम् ॥ कार्पास्याम् ॥ गौरादित्वान्ङीष् ॥ बदरीफले ॥ बदर्या : फलम् हरीतक्यादिभ्यश्चेति० विकारार्थस्य लुप् ॥

बदरीखण्ड : । पुं० बदरीणां समूहे ॥ वृक्षादिभ्य : खण्ड : ॥

बदरीच्छदा स्त्री० शङ्खनख्याम् ॥ हस्तिकोलिवृक्षे ॥

बदरीपत्त्रकम् । न० नखीनामगन्धद्रव्ये ॥

बदरीपाचनम् । न० तीर्थविशेषे ॥ तत्रवशिष्ठाश्रम : ॥

बदरीफला । स्त्री० नीलशेफालिकायाम् ॥

बदरीशैल : । पुं० अलकनन्दाया : पश्चिमतीरेहिमाचलैकदेशे ॥

बदरीषण्ड : पुं० बदरीखण्डे ॥ बदरीणांषण्ड : समूह : ॥

बदर्याश्रम : । पुं० नारायणाश्रमे ॥

बद्ध : । त्रि० कीलिते । संयते । कारागारादौनिगडिते ॥ बध्यतेस्म । बधबन्धने । क्त : ॥ मोहाद्यावृते ० सुखदु:खादिधर्मवति० पाशाष्टकेनयंत्रितेसंसारिजीवविशेषे ॥

बद्धगुदम् । न० उदरामयविशेषे । तन्निदानं यथा । यस्यान्त्रमन्नैरुपलेपिभिर्वाबालाश्मभिर्वापिहितं यथावत् । सञ्चीयते तस्यमल : सदोषात् शनै: शनै : शङ्करवच्चनाडयाम् ॥ निरुध्यते तस्य गुदेपुरीषं निरेतिकृच्छ्रादपिचाल्पमल्पम् । हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरंबद्धगुदं वदन्ति ॥

बद्धफल : । पुं० करञ्जवृक्षे ॥

बद्धमुष्टि : । त्रि० कृपणे ॥

बद्धमूल : । त्रि० दृढमूले । उत्पाटनानर्हमूले । बद्धोमूलोयस्य स : ॥

बद्धमौन : । त्रि० नि : शब्दे ॥

बद्धरसाल : । पुं० त्रिविधराजाम्रान्तर्गताम्रसमाम्रे । मध्याम्रे । मन्मथानन्दे ॥

बद्धशिख : त्रि० शिशौ । बाले ॥ संयतचूडेनरे ॥ यथा । सदोपवीतिनाभाव्यं सदाबद्धशिखेनतु । विशिखोव्युपवीतश्चयत्करोतिन तत्कृतमिति ॥ बद्धाशिखायस्य ॥

वद्धशिखा । स्त्री० उच्चटौषधौ ॥

वध : । पुं० प्राणवियोगफलकव्यापारे । प्रमापणे । मारणे ॥ हननम् । हन० । हनश्चवधइत्यप् ॥ पुण्यप्रद वधस्तुयथा । एकस्ययत्रनिधनेप्रवृत्ते दुष्टकारिणाम् । बहूनांभवति चक्षेमं तस्यपुण्यप्रदोवध: ॥ एकास्त्रीसुरापश्चब्रह्महागुरुतल्पग : । आत्मानं घातयेद्यस्तुतस्यपुण्यप्रदो वध: ॥ इति ॥ अपिच । नैकस्यार्थे बहून्हन्यादितिशास्त्रेषुनिश्चय: एकं हन्याद्बहूनांहिनपापीतेन जायते ॥ इति वामनपुराणे ५५ अध्याय : । पारिभाषिकवधस्तु । वपनं द्रविणादानं स्थानान्निर्यापणं तथा । एषहिब्रह्मबन्धूनांबधोनान्यो स्तिदैहिक : ॥ इ० ॥ करचरणादिच्छेदनादिरूपे ताडने ॥ सप्तमतारायाम् ॥

वधक : पुं० व्याधे । मृत्यौ ॥ बधकर्त्तरि । वद्धक० इ० भा० ॥ त्रि० हिंस्रे ॥ हन्ति । हन० । ण्वुल् । बहुलं तणीतिण्वुलिवधादेश : ॥ बधहिंसायांबा । तदा० जनिबध्योश्चेतिवृद्धिनिषेध : ॥

वधत्रम् । न० आयुधे ॥ बध्यतेऽनेन । बध० । अमिनक्षियजिवधिपतिभ्योऽत्रन् ॥

वधस्थली । स्त्री० वधस्थाने ॥

वधस्थानम् । न० आघातने । सूनायाम् ॥ वधस्यस्थानम् ॥

वधाङ्कम् । न० कारावेश्मनि ॥

वधार्ह : । त्रि० हननयोग्ये ॥ वध्ये ॥

वधी । त्रि० वधकर्त्तरि ॥

वधिर : । त्रि० एडे । श्रवणशक्तिहीने बहरा० इ० भा० ॥ वाधिर्यनिदानन्तु । यदाशब्दवहं वायु: स्रोतआवृत्यतिष्ठति । शुद्धश्श्लेष्मान्वितोवापिवाधिर्यन्तेनजायते ॥ औषधं यथा० । कर्णशूलेकर्णनादेवाधिर्ये क्ष्वेडएवच । चतुर्ष्वपिचरोगेषुसामान्यं भेषजं स्मृतम् ॥ शृङ्गवेरञ्च मधुचसैन्धवं तैलमेवच । कटूष्णं कर्णयोर्धार्यमेतत्स्याद्वेदनापहम् ॥ इ० ॥ वाधिर्यं बालवृद्धोत्थं चिरोत्थञ्चविवर्ज्जयेत् ॥ बध्नाति कर्णम् । वध्यतेवा बन्धबन्धने । इषिमदिमुदीतिकिरच् ॥ भिक्षुकलक्षणे । हितं मितं मनोरम्यं वच : शोकापहञ्चयत् । श्रुत्वायो नशृणोतीवबधिर : सप्रकीर्त्तित : ॥

वधोद्यत : । त्रि० परवधायोद्युक्ते । सन्नद्धे । आततायिनि ॥

वध्य : । त्रि० वधार्हे । शीर्षच्छेद्ये ॥ किन्त्वयानश्रुतंलोकेअवध्या : प्रमुयोषित: । हीनवर्णोपभुक्तायात्याज्या

वध्यापिवाभवेत् ॥ अवध्यायथा । मोब्राह्मणंव्रतमथापिमुग्धं वालंस्वबन्धुंललनांसुदुष्टाम् । कृतापराधानपिनैववध्याचार्यमुख्यादागुरवस्तथैवेति ॥

वध्यपाल : । पुं० कारागृहरक्षके ॥

वध्रम् । न० नागे । सीसके । सीसा० इ०भा० ॥ बध्यतेऽनेन । सर्वधातुभ्य ष्ट्रन् ॥

वध्री । स्त्री० वध्र्याम् । वरत्रायाम् । चर्मरज्जौ । वरत० लाव० इ० भा० ॥ बध्यतेऽनया । ष्ट्रन:षित्वान्ङीष्

बन्ध : । पुं० आदौ ॥ बन्धने ॥ अन्त : करणाशुद्धिरूपेज्ञानप्रतिबन्धे । कर्तृत्वाद्यभिमाने ॥ विपर्ययादिष्यते बन्ध : । विपर्ययात्०अतत्त्वज्ञानात् सच०प्राकृतिकवैकारिकदाचिणिकभेदात्त्रिविधउक्तस्तत्तद्व्याख्यानतोऽवगन्तव्य: ॥ पुनर्बन्धोद्विविध: । तीव्रोमृदुश्चेति । तत्रसुरसम्पत्० साचादेवक्लेशहेतुत्वात्तीव्रोवन्ध: । दैतमाचप्रतीतिस्तुस्वयमक्लेशरूपत्वाच्चमृदुबन्धइति ॥ वध्यतेऽनेनवा । बन्ध० । हलश्चेतिघञ् ॥ दृहादिवेष्टने ॥ शरीरे ॥ निगडादिबन्धने ॥ अनेकान्तवादिमतेतु० नानानिरयसंसरणकारणं मोहादिरष्टविधोगण: स्वातन्त्र्यविघातहेतुत्वाद्वन्ध: । उक्तञ्च । मोहादिकोगणश्चैवबन्धो

जीवस्यकल्पित : । लोहपञ्जरस्तश्च इ यथाक्षिप्तं जलाशये । अलाबुकमधोयातितद्वज्जीव: सबंधनइति ॥ जालंधरोड्डीयनमूलबंधान्जल्पन्ति- कण्ठोदरपायुमूले । बंधत्रयेस्मिन् परिचीनमानेबंध : कुतोदारुणकालपाशै : ॥ इतियोगविद : ॥ षोडशप्रकारैरतिबंधे ॥ तेयथा । पद्मासनोनागपदोलतावेष्टोऽर्द्धसंपुट: । कुलिशंसुन्दरश्चैवतथाकेशरएवच हिल्लोलोनरसिंहो पिविपरीतस्तथापर : । क्षुब्धोवैधेनुकश्चैवसमुत्कण्ठस्तत : परम् ॥ सिंहासनोरतिनागोविद्याधरस्तुषोडश । इतिरतिमञ्जरी । एतेषांलक्षणानितत्तच्छब्देद्रष्टव्यानि ॥ संज्ञाप्रभेदेनान्येऽपि- बंधा: सन्ति । यथा कामप्रदोविपरीतोनागरोरतिपाशक: । केयूर: प्रियतोषश्चतत : समदस्तथा ॥ ततश्चैकपदोज्ञेय : सम्पुटश्चोर्ध्वसम्पुट : । ततस्तनभवश्चैवततोनुरतिसुन्दर : ॥ ऊरुपीडस्मरचक्रौतथोरुक्रम : स्मृत : । वेष्टकोहंसकीलस्तुततोलीलासनस्तथा ॥ अष्टादशक्रमाद्बंधा:स्त्रीणांबहुसुखप्रदा:॥ पुंसांकराश्चैवकथितास्तुक्रमात्तत: ॥

बंधक: । पुं० विनिमये ॥ आधौ ॥ रतहिण्डके ॥ सत्यङ्कारे ॥ न० आधौ । यदुत्तमर्णायभूम्याद्याधीयतेतत ॥

॥ त्रि० उन्नतानते ॥ रम्ये ॥ नम्रे ॥ बध्नाति । बंध० । मद्गुरादयश्चे तिसाधु : ॥

बंधुरा : । पुं० भूमि०सत्सु ॥

बंधुरा । स्त्री० पण्ययोषायाम् ॥

बंधुल : । पुं० असतीपुत्रे ॥ बंधून्लाति । आतश्चेतिक : ॥ त्रि० नम्रे ॥ सुन्दरे ॥

बंधूक : । पुं० पीतसालके । सर्जके । प्रियके । विजयसार०इ०भा० ॥ पियासाल०इ०गौ०भा० ॥ न० पुष्पवृक्षवि० । रक्तके । बंधुजीवके । दोपहरिया०मभनिया० इ० भा० ॥ बाँदुली० इ० गौ० भा० ॥ बंधूक : कफकृद्ग्राहीवातपित्तहरो लघु : ॥ बध्नातिचित्तम् । बंध० । उलूकादयश्चेत्यूक : ॥ स्वधूपे । बन्धूक०इ०भा० ॥ यथा । बंधूकोबंधुजीवेस्यात्स्वधूपेस्यान्नपुंसकमितिहट्टचन्द्र : ॥

बन्धूकपुष्प : । पुं० पीतसाले । जीवकतरौ । विजयसार० इ० भा० ॥ बन्धूकस्येवपुष्पाण्यस्य ॥ बीजके ॥

बंधूर : । पुं० विवरे ॥ त्रि० शोभने ॥ नम्रे ॥ बध्नाति । बंध० । खर्जूरादित्वादूर : ॥ उन्नतानते ॥ बंधूरबंधुरौरम्येनम्रे हंसेतुबंधुरइतिरभस : ॥

बन्ध्य : । त्रि० अफले । अवकेशिनि । निष्फले । ऋतुप्राप्तावपिफलरहिते वृक्षादौ ॥ बंधेसाधु : । तत्रसाधुरितियत् ॥ बंधनीये ॥

बन्ध्या । स्त्री० अप्रजस्त्रियाम् । बांझ इ० भा० ॥ अपत्यशून्यायांगवि । वशायाम् ॥ इष्टलीविशेषे ॥ यथा । वन्ध्याचाष्टमलीज्ञेयाद्वष्टलीचमृतप्रजा । अपराष्टमलीज्ञेयाकुमारीयारजस्वला ॥ वलाख्यगंधद्रव्ये । बाल्यालके ॥ बध्नाति । बंध० । यत् । अघन्यादित्वात्सत्यवा ॥ योनिरोगविशेषे ॥

बन्ध्याकन्द : । पुं० वन्ध्याकर्कोटक्याम् । बांझखखसा० इ० भा० ॥

बन्ध्याकर्कोटकी । स्त्री० विषकण्टकिन्यामोषधौ । ककोडी०खखसा० इ० भा० ॥ वन्ध्याकर्कोटकीलघ्वी कफनुद्व्रणशोधनी । सर्पसर्पहरीतीक्ष्णाविसर्पविषहारिणी ॥

बभस : । त्रि० भक्षणशीले ॥

बभ्रु : । पुं० वैश्वानरे । अग्नौ ॥ शूलपाणौ । शिवे ॥ गरुडध्वजे ॥ विष्णौ ॥ विशाले ॥ नकुले ॥ स्थूलपुष्करनेचोवभ्रुर्भेद : सनाकुल : ॥ मुनिभेदे ॥ देशभेदे ॥ यादवविशेषे ॥ सितावरशाके ॥ त्रि० पिङ्गले । पिङ्गलवर्णवति ॥ बिभर्ति० भरतिवा । डुभृञ्० भृञ्०वा । कुर्भ्रश्चेति०कुर्दित्वञ्च ॥ खलतौ ॥

बभ्रुज : । पुं० ब्राह्मणे ॥

बभ्रुधातु : । पुं० सुवर्णगैरिके ॥
वर : । पुं० जामातरि ॥ वृतौ ॥ देवतादेरभीप्सिते ॥ षिड्गे ॥ न० कुङ्कुमे ॥ त्वचे ॥ वालके ॥ आर्द्रके ॥ ईषदिष्टे ॥ मनागिष्टे वरंक्लीबेकेचिदाहुस्तदव्ययम् ॥ त्रि० । श्रेष्ठे ॥
वरा । स्त्री० फलत्रिके ॥ गुडूच्याम् ॥ मेदायाम् ॥ ब्राह्म्याम् ॥ विडङ्गे ॥ पाठायाम् ॥ हरिद्रायाम् ॥
वरी । स्त्री० शतावर्याम् ॥
बर्बरक : । पुं० पांशुचामरे ॥
बर्बट : । पुं० राजमाषे ॥
बर्बटी । स्त्री० पण्ययोषायाम् ॥ व्रीहिभेदे ॥
बर्बरा । स्त्री० वृहन्मक्षिकायाम् । नीलायाम् ॥ पश्चान्तस्थादिवर्बराम् ॥
बर्ह : । पुं० न० मयूरपिच्छे ॥ दले । पत्रे ॥ परिवारे ॥ बर्हति । वृहवृद्धौ ॥ पचाद्यच् ॥ बर्हतेवा । बर्हहिंसायाम् । घञ् ॥
बल : । पुं० हलायुधे । बलदेवे ॥ दैत्यप्रभेदे ॥ मयपुत्रे ॥ अस्यस्थानमतलं । यथा । प्रथमेविवरेविप्रअतलाख्येमनोरमे । मयपुत्रोवलोनाम वर्ततेऽखर्वगर्वकृत् । षण्णवत्योयेनसृष्टामायासर्वार्थसाधिकाः । मायाविनोयास्वस्योधारयंतिचकाश्च नेति० दे० भा० ॥ वायसे ॥ वरुणद्रुमे ॥ न० गंधरसे ॥ रूपे ॥ शौर्ये । स्थामनि । शुक्रे । शक्तौ । पराक्रमे ॥ बाहुबलमनोबलोपायबलबंधुबलेषुचतुर्षु ॥ सामादिषु ॥ स्थौल्ये ॥ सैन्ये ॥ तत्षड्विधम् । मौलंभृत्यंसुहृच्छ्रेणीद्विषदाटविकंबलमितिभेदात् । तच० मित्राटवीबलंचैवमौलंभृत्यबलंतथा । सर्वमेतद्बलंप्राहुर्वज्र्यंयित्वाद्विषद्बलम् ॥ इतिनीति : । देहसामर्थ्ये ॥ परपरिभव निमित्त शरीरगतसामर्थ्यविशेषे ॥ अवश्यमिदंसाधयिष्यामीत्याग्रहे । सोचितिकार्येश्रमाभावप्रयोजकेदार्ढ्ये । कर्मेन्द्रियपाटवे ॥ स्वधर्मानुष्ठानायदेहेन्द्रियादिधारणसामर्थ्ये ॥ रसादिशुक्रपर्यंन्तपुष्टधातुनिमित्तकम् । चेष्टासुपाटवंयत्तु वलंतदभिधीयते ॥ शुक्रे ॥ त्रि० बलयुक्ते ॥ बलमस्यास्ति । अर्श आद्यच् । बलते० बलतिवा० वल्यतेवा० अनेन । बलसम्वरणे० बलप्राणनेवा । पचाद्यच्० कर्मणिघञ्वा । संज्ञापूर्वकत्वान्नवृद्ध्यभाव : । पुंसीति० घोवा ॥ बललेऽनेन । खनोघचेतिघोवा ॥ पारिभाविकबलानियथा । विद्याभिजनमित्राणिवृद्धिसत्त्वधनानिच । तप : सहायवीर्याणिदैवञ्चदशमंबलम् ॥ अपिच । अबलस्यबलंरा

आबालस्यरुदितंबलम् । बलंमूर्खस्य मौनन्तुतस्करस्याऽनृतंबलम् । अपिच० ब्र० । क्षत्रियाणांबलंयुद्धंव्यापारस्तुबलंविशाम् । भिक्षाबलंभिक्षुकाणांशूद्राणांविप्रसेवनम् ॥ हरौ भक्तिर्हरेर्दास्यं वैष्णवानांबलंहरि : । हिंसाबलंखलानाञ्च तपस्याचतपस्विनाम् ॥ बलंवेशस्तुवेश्यानांयोषितांयौवनंबलम् । बलंप्रतापोभूपानां बालानांरुदितंबलम् ॥ सतांसत्यंबलंमिथ्याबलमेवासतांसदा । अनुगानामनुगम : स्वल्पस्थानाञ्चसञ्चय : ॥ विद्याबलंपण्डितानांवाणिज्यंवणिजांबलम् । अश्वत्सुकर्म्मशीलानांगाम्भीर्य्यंसाहसंबलम् ॥ धनंबलञ्चधनिनांशुचीनाञ्चविशेषत : । बलंविवेक : शान्तानांगुणिनांबलमेकता ॥ गुणोबलञ्चगुणिनांचौराणांचौर्य्यमेवच । विप्रवाक्यञ्चकापथ्यञ्चधर्म्मसृणिनांबलम् ॥ हिंसाचहिंस्रजन्तूनांसतीनांपतिसेवनम् । वरशापौसुराणाञ्चमिथ्याणांगुरुसेवनम् ॥ बलंधर्म्मोगृहस्थानांभृत्यानांराजसेवनम् । बलंस्तवःस्तावकानांब्रह्मचब्रह्मचारिणाम् ॥ यतीनाञ्चसदाचारोन्यास : सन्यासिनांबलम् । पापंबलंपातकिनांसुभक्तानांहरिर्बलम् ॥ पुण्यं बलंपुण्यवतांप्रजानांनृपतिर्बलम् । फलंबलञ्चवृक्षाणांजलंमीनांज-

लंबलम् ॥ जलंदलञ्चसस्यानांमत्स्यानांचजलंबलम् । शान्तिर्बलञ्चभूपानांविप्राणाञ्चविशेषत : ॥ ब्रू० ॥

बलच : । पुं० शुक्लवर्णे ॥ त्रि० तद्वति ॥

बलचग्गु : । पुं० चन्द्रे ॥

बलजम् । न० गोपुरे ॥ क्षेत्रे । सस्ये । सङ्गरे ॥ धान्यराशौ ॥ बलेजातम् । जनौ० । ड : ॥ त्रि० भद्राकृतौ । सदाकारे ॥ बलजन्ये ॥

बलजा : । स्त्री० बल्गुदर्शनायाम् । वरयोषायाम् ॥ यूथ्याम् ॥ पृथिव्याम् ॥

बलद : । पुं० जीवके ॥ पौष्टिककर्म्माङ्गहोमाग्नौ ॥ त्रि० बलदातरि ॥

बलदा । स्त्री० अश्वगन्धायाम् ॥

बलहीनता । स्त्री० ग्लानौ ॥

बलदेव : । पुं० बलभद्रे । प्रलम्बघ्ने । अच्युताग्रजे ॥ अस्यध्यानंयथा । बलदेवंद्विवाहुञ्चशङ्खकुन्देन्दुसन्निभम् । वामेहलायुधधरंदक्षिणेमुसलंकरे ॥ हालालोलंनीलवस्त्रंहेलावन्तंस्मरेत्परमिति ॥ वाते । वायौ ॥ बलेनदीव्यति । दिवु० । अच् ॥

बलदेवा । स्त्री० त्रायमाणायामोषधौ ॥

बलप्रसू : । स्त्री० रोहिण्याम् । बलरामातरि ॥ बलस्यप्रसू : ॥

बलभद्र : । पुं० सीरिणि । हलायुधे ॥ बलशालिनि ॥ लोध्रे ॥ गवये ॥ बलंभद्रंश्रेष्ठमस्य । बलेनभद्रइतिवा ।

॥ भगवे ॥
बलभद्रा । स्त्री० त्रायमाणौषधौ ॥ कुमार्याम् ॥ बलेनभद्रा ॥
बलभद्रिका । स्त्री० त्रायमाणौषधौ ॥ बलेनभद्रा । स्वार्थेकन् ॥ माषरोटिकायाम् ॥ चमसीरचितारोटी कथ्यतेबलभद्रिका । हन्नोष्णावातला बल्याटीपाग्नीनांप्रपूजिता ॥
बलभित् । पुं० इन्द्रे ॥ बलंदैत्यविशेषंभिनत्ति । भिदिर्० । क्विप् ॥
बलभी । स्त्री० वडभ्याम् ॥ कूटागारे॥
बलरामः । पुं० बलदेवे ॥
बलल : । पुं० बलदेवे ॥ बलंलाति । ला० । कः ॥
बलवत् । अ० अतिशये । निर्भरे ॥ बलमस्यास्ति । मतुप् ॥
बलवान् । त्रि० मांसले । अंसले । बलयुक्ते । बलमस्यास्ति । मतुप् ॥ प्रबले ॥
बलवर्द्धिनी । स्त्री० जीवकौषधौ ॥
बलवल्लभा । स्त्री० वारुण्याम् ॥
बलविन्यास : । पुं० व्यूहे ॥ बलस्य सेनायायुद्धार्थं देशविशेषे०विन्यासो दुर्लङ्घ्यत्वनिमित्तं विभज्यस्थापनम् ॥
बलसूदन : । पुं० इन्द्रे ॥ बलनामानमसुरंसूदितवान्० सूदयति । सूदक्षरणे । नन्द्यादित्वाल्ल्यु : ॥
बलस्थिति : । स्त्री० शिविरे ॥ बलस्य स्थिति : । बलस्यस्थितिर्यस्मिन्वा ॥
बलहा । पुं० श्लेष्मणि । कफे ॥
बला । स्त्री० वाट्यालके । वाड़ियाला० इ० गौ० भा० ॥ बलाचतुष्टयस्यनामादियथा । बलावाट्यालिकावाट्याशैववाट्यालकोपिच । महाबलापीतपुष्पासहदेवीचसास्मृता ॥ ततोन्यातिबलाऋष्यप्रोक्ताकङ्कतिकासहा । गाङ्गेरुकीनागबलाझषाह्रस्वागवेधुका ॥ बलाचतुष्टयंशीतंमधुरंबलकान्तिकृत् । स्निग्धंग्राहिसमीरास्रपित्तास्रक्षतनाशनम् ॥ बलामूलत्वचश्चूर्णं पीतंसक्षीरशर्करम् । मूत्रातिसारंहरतिदृष्टमेतन्नसंशय : ॥ हरेन्महाबलाकृच्छ्रं०भवेद्वातानुलोमिनी । हन्यादतिबलामोहंपयसासितयासह ॥ अपिच । वाट्यालकोवाट्यपुष्पीसंमांसाविललाबला । श्वेतवाड़ियाला० इ० गौ० भा० ऋष्यप्रोक्तात्वतिबला पीतपुष्पीमहाबला । पीतवाड़ियाला० इ०गौ०। भा० ॥ स्निग्धायुष्याबलावृष्याग्राहिणीवातपित्तजित् ॥ बलति । बलसंवरणे । पचाद्यच् । बलमस्त्यस्या : अर्शआद्यच् ॥ रामायविश्वामित्रेणदत्तायांविद्यायाम् ॥ यथा । क्षुत्पिपासेनतेराममभविष्येतेनरोत्तम । बलामतिबलाञ्चैवपठत : पथिराघवेत्यार्षरामायणम् ॥ शारीरं

बलाधिक्यस्त्ववलाया : फलम् । ज्ञातबलायास्तुफलंमन : सङ्कल्प मात्रेणालौकिकार्थसाधनमित्यन वोविंशेष : ॥
बलाका स्त्री० बकजातिविशेषे । बिसकण्ठिकायाम् । वगुली० इ० भा० । जातिवाच्यायांस्त्रियामेव सर्वदानियत: ॥ बलते । बलसंब रणेसंचरणेच । बलाकादयश्चेतिसाधु : ॥ वलिनचकतिवा । अककुटिलायांगतौ । अच् । बला का२का८ङ्क्षौस्याद्बलाकाशलकौपुच । सारसहंसबलाकाचक्राङ्कौचादयोजलेप्लवनात् । प्लवसंज्ञा : कथितास्ते तन्मांसंगुरूष्णंचबलदायि ॥ अन्येबकबलाकाद्यागुरव : प्राविभक्षणात् ॥
बलाकी । त्रि० बलाकावति ॥ बलाका अस्तिअस्यअस्मिन्वा । ब्री०इनि: ॥
बलांचिता । स्त्री० रामवीणायाम् ॥
बलाट : । पुं० मुद्गे ॥
बलात् । अ० हठादर्थे । यथा । बलात्सन्द्दर्षयेद्यस्तुपरभार्यांनर : क्वचित् । वधदण्डोभवेत्तस्यनापराधोभवेत्स्त्रिया : ॥
बलात्कार : । पुं० प्रसभे । हठे ॥ बलादितिनिपातोहठे ० इ० स्वामी ॥ बलात्करणम् । भावेघञ् ॥ बद्ध्वास्वगृहमानीयताडनाद्यं रूप क्रमै : । कथितोदाप्यते यत्रबलात्कार : प्रकीर्तित : ॥
बलात्मिका । स्त्री० हस्तिशुण्डाम् ॥
बलाद्या । स्त्री० बलायाम् ॥
बलाध्यक्ष : । पुं० सेनापतिदशकस्येकस्मिन्सेनानायके ॥
बलानुज : । पुं० श्रीकृष्णे ॥
बलामोटा । स्त्री० नागदमन्याम् । विषापहायाम् ॥ बलामोटाकटुस्तिक्तालघुपित्तकफापहा । मूत्रकृच्छ्रव्रणान्रक्षोनाशयेज्जालगर्दभान् ॥ सर्वग्रहप्रशमनीनि : शेषविषनाशिनी । जयंसर्वत्रकुरुतेधनदासुमतिप्रदा ॥
बलाय : । पुं० वरुणद्रुमे ॥
बलाराति : । पुं० शचीपतौ । इन्द्रे ॥ बलस्यासुरस्यअराति : शत्रु : ॥
बलालक : । पुं० पानीयामलके ॥
बलाश : । पुं० ) श्लेष्मणि ॥
बलाशक: । पुं० ) इतिहेमचन्द्र : ॥
बलास : । पुं० कफे ॥
बलाहक : । पुं० मेघे । अम्बुदे ॥ वारिवाहकोबलाहक : । पृषोदरादित्वात्पूर्वपदस्यव : उत्तरपदादिश्चलत्वम् ॥ बलाकाभिर्हीयतेगम्यते । ओहाङ्० गतौ० पृ० ॥ बलेनहीयतेवा । क्वुन् ॥ गिरौ ॥ दैत्यविशेषे ॥ नागविशेषे ॥ मुस्तके ॥ श्रीकृष्णस्यन्दनाश्वे ॥ रमागर्भोद्भव

कलिङ्गदेवपुत्रे ॥
बलाह्वकन्दः । पुं० गुलञ्चकन्दे ॥
बलिः पुं० दैत्यप्रभेदे । विरोचनात्मजे ॥ करे । राजग्राह्यभागे ॥ चामरदण्डे ॥ उपहारे । उपायने । भेंट० इ० भा० ॥ पूजासामग्याम् ॥ नियोज्योपजीव्ये ॥ पञ्चमहायज्ञान्तर्गतभूतयज्ञे ॥ तिर्यग्भिक्षुकादिदाने ॥ ययातिवंशीद्भवसुतपोराजपुत्रे ॥ बलिवैश्वनामकपंचयज्ञान्तर्गतयज्ञविशेषे ॥ बलते० बल्यते वा । बलप्राणने० बलसंवरणे संचरणे च । सर्वधातुभ्यइन् ॥ बलनम् । बलदाने । बलते वा । खनिकषीति० इन् ॥ यद्वा । वर्णि : सौच : । अस्य० वर्णो बलिश्चाहिरण्ये० इतिवलिरादेशः ॥
बलिः । स्त्री० जरयाश्लथचर्मणि ॥ चर्म्मतरङ्गे ॥ गृहदारुप्रभेदे ॥ जठरावयवे ॥ यथा । एकवलिः शस्तमृत्युः स्त्रीभोगीद्विबलिः स्मृतः । त्रिभिराचार्य इत्याहुश्चतुर्भिःस्याद्बहुप्रजः ॥ अबलिस्तुनृपः प्रोक्तोयज्वादानैक तत्परः । विषमावलयोयेषुते चागस्याभिगामिनः ॥ ऋजव्यस्तुवलयोयेषुते नराः सुखभागिनः ॥ इति ॥ गन्धके ॥ गुदाङ्कुर ॥

बलिकम् । न० पटलप्रान्ते ॥
बलिकरः । त्रि० बलिकर्त्तरि ॥ बलिंकरोति । दिवाविभेतिटः ॥
बलिका । स्त्री० अतिवलायाम् ॥
बलिक्रिया । स्त्री० इष्टदेवतापूजाविधौ ॥
बलितः । त्रि० वेष्टिते ॥
बलिदानम् । न० देवोद्देशेनयथाविधिपूजोपहारत्यागे ॥ देवतोद्देशेन सङ्कल्पपूर्व्वकच्छागादिपशुघातने ॥ बलिदानेनसततंजयेच्छत्रून्नृपान्नृप ॥
बलिध्वंसी । पुं० विष्णौ ॥ बलिमसुरविशेषंध्वंसितुंशीलमस्य । ताच्छील्येणिनिः ॥ बलिनापूजादिना० अविद्यांध्वंसितुंशीलमस्येतिवा ॥
बली । पुं० बलदेवे ॥ माषे ॥ वृषभे ॥ महिषे ॥ उष्ट्रे ॥ शूकरे ॥ कर्फ ॥ कंदब्जे ॥ त्रि०बलवति । उपचिते । मांसले ॥ बलमस्यास्ति । बलादिभ्योमतुबन्यतरस्यामितिपक्षे इनिः ॥
बलिनः । त्रि० बलिभे । श्लथचर्म्मवति ॥ बलिश्चर्मसङ्कोचोस्यास्ति । पामादित्वान्नः ॥
बलिनन्दनः । पुं० बाणासुरे ॥
बलिनी । स्त्री० बलायाम् । बाग्यालके ॥ बलमस्त्यस्याम् । बलादिभ्योम

तुवन्यतरस्यामितिपक्षेद्बनि : ॥
बलिपुष्ट : । पुं० काके ॥ बलिनापुष्ट : ॥
बलिपोटकी । स्त्री० उपोदक्याम् ॥
बलिप्रिय : । पुं० लोध्रवृक्षे ॥
बलिभ : । त्रि० बलिने । जरयाश्लथचर्मणि ॥ बलिश्चर्मसङ्कोचोस्यास्ति । तुन्दिवलिवटेर्भ : ॥
बलिभुक् । पुं० वायसे ॥ बलिंभुङ्क्ते । भुजपालनाभ्यवहारयो : । क्विप् ॥
बलिमन्दिरम् । न० पाताले ॥ बलेर्मंदिरमत्र ॥
बलिमुख : । पुं० बलिमुखे ॥
बलिशम् । न० बडिशे । मत्स्यवेधने ॥ बलिनोमत्स्यान्० श्यति । शोतनूकरणे । आतोनुपेतिक : ॥
बलिष्ठः । त्रि० बलवत्तमे ॥ अतिशयेनबलवान् । बलशब्दान्मतुबन्तादिष्ठन्प्रत्यय : । विन्मतोर्लुगितिमतुपोलुक् ॥ प्रायश्चित्तंविनापूतास्त्वमेवशुद्धमानसा । अकामायावलिष्ठेननस्त्रीजारेणदुष्यति ॥
बलिष्णु : । त्रि० अपमानिते ॥
बलिसद्म । न० रसातले । पाताले । बले : सद्म ॥
बलिहा । पुं० विष्णौ ॥
बली । स्त्री० बलौ । त्वगूर्मौ । चर्मतरङ्गे ॥

बलीकम् । न० नीध्रे । पटलप्रान्ते । छांची०इ०गौ०भा० । परावली०इ०भा० । बलति । आवृणोतिभित्त्यादि । बलसंवरणे । अलीकादयश्चेतिकीकन् ॥
बलीमुख : । पुं० वानरे ॥ बलीयुक्तंमुखमस्य ॥
बलीयान् । त्रि० अतिशयेनबलयुक्ते ॥
बलीवर्द : । पुं० वृषे । बैल०बरध०बर्धा०इ०भा ॥ बरणम् । वरईप्सायाम् । सम्पदादित्वात्क्विप् । ईश्वरश्च०ईवरी । तौददाति । आतश्चेतिक : । अतिशयितंबलमस्य । अतइनि : । बलीचासौ०ईवर्दश्च ॥ तीर्थयात्रायांतदारूढस्यदोषोयथा- मात्स्ये । बलीवर्दसमारूढः शृणुतस्यापियत्फलम् । नरकेवसतेघोरेगवांक्रोधेद्धिदारुणे ॥ सलिलञ्च- नगृह्णन्तिपितरस्तस्यदेहिनइति ॥
बलु : । स्त्री० हस्तिदंतालिकायाम् ॥
बलूक : । पुं० पद्ममूले । पक्षिविशेषे ॥ बलते । बल० । बलेरूक : ॥
बलूल: त्रि० बलवति ॥ बलंनसहते । बलाटूल : ॥
बल्मिक : । पुं० न०बल्मीके ॥
बल्मीकि : । पुं० न०बल्मीके ॥
बल्मीक : । पुं० न०वामलूरे । नाकौ । पिपीलिकादिकीटविशेषकृतेमृत्स्तूपे । बावी०इ०भा० ॥ न० रोग

विशेषे । अस्यलचणं । यथा । ग्रीवांसकचाकरपाददेशेसन्धौगलेवात्रिभिरेवदोषैः । ग्रन्थिः सवल्मीकवदुन्नियाणांजातः क्रमेणवगतप्रवृद्धिः ॥ मुखैरनेकैः स्रुतितोदवद्भिर्विसर्पवत्सर्पतिचोन्नताग्रैः । वल्मीकमाहुर्भिषजोविकारंनिष्प्रत्यनीकंचिरजंविशेषात् ॥ वाल्मीनिमुनौ ॥ वलल्तेप्राणिनोऽत्र । अलीकादयश्चेति कीकन्नन्तोनिपातित : ॥

वल्मीकशीर्षम् । न० स्रोतोञ्जने ॥

वल्मीकि : । पुं० वल्मीके ॥

वल्मीकूटम् । न० वल्मीके ॥

वल्य : । पुं० बुद्धभिक्षुके । श्रमणे ॥ न० प्रधानधातौ । रेतसि ॥ त्रि० वलकरे ॥

वल्या । स्त्री० अतिबलायाम् ॥ अश्वगन्धायाम् ॥ शिमृडीक्षुपे ॥ प्रसारिण्याम् ॥

वल्ल : । पुं० गुञ्जात्रयपरिमाणे । द्विगुञ्जपरिमाणे ॥ सार्द्धगुञ्जायाम् ॥ वल्लते । वल्लसंवरणे सञ्चरणे च । प० अच् ॥

वल्लक : । पुं० निष्पावे । राजशिम्ब्याम् ॥

वल्लकी । स्त्री० वीणायाम् । विपञ्च्याम् ॥ वल्लते । वल्ल० । क्वुन् । गौरादित्वान्ङीष् ॥ सल्लकीवृक्षे ॥

वल्लभ : । त्रि० दयिते । प्रिये ॥ अध्यक्षे ॥ न० कुलीनाश्वे । सल्लक्षणतुरङ्गमे ॥ अध्यक्षोऽश्वगवाध्यक्ष इति स्वामी ॥ वल्लते०वल्ल्यतेवा । वल्ल० । रासिवल्लिभ्यांचेत्यभच् ॥

वल्लभपाल : | पुं० | उत्तमाश्वपाले ॥ अश्वरक्षके ॥
वल्लभपालक:

वल्लभा । स्त्री० प्रियायाम् । प्रेयस्याम् ॥

वल्लरम् । न० वल्लूरे ॥

वल्लरि : । स्त्री० मञ्जर्याम् ॥

वष्कय : । पुं० तरुणवत्से । वहेडा० इ० भा० ॥ वष्कते । वष्कगतौ । वा० अयन् ॥

वष्कयणी । स्त्री० वष्कयिण्याम् ॥

वष्कयिणी । स्त्री० तरुणवत्सायाङ्गवि० बाखडी० इ० भा० ॥ वष्कयस्तरुणवत्स : ० सोऽस्त्यस्या : । अतइनिठनावितीनि : । अट्कुप्वाङिति णत्वम् । ङीप् ॥

वहि : । अ० बाह्ये ॥ वहति । वह० इस् ॥ वबयोरभेद : ॥

वहु । त्रि० त्र्यादिसङ्ख्यासु ॥ विपुले । भूयसि ॥ वंहते । वहिवृद्धौ ॥ लङ्घिवंह्योर्नलोपश्चेत्यु : ॥ स्त्रियां० वह्वादित्वात्०पाक्षिकोङीषभाव: । ङीष्पक्षे० वह्वी ॥

वहुक : । पुं० कर्कटे ॥ अर्के ॥ दात्यू

हे ॥ जलखातके ॥ त्रि० वहुभिःक्रीते ॥ सङ्ख्यायाअतिशदन्तायाः कन् ॥

वहुकण्टकः । पुं० क्षुद्रगोक्षुरे ॥ यवासे ॥ हिन्ताले ॥

वहुकण्टका । स्त्री० अग्निदमन्याम् ॥

वहुकण्टा । स्त्री० कण्टकार्याम् ॥

वहुकन्दः । पुं० शूरणे ॥

वहुकन्दा । स्त्री० कर्कट्याम् ॥

वहुकरः । पुं० वक्रग्रीवे ॥ उष्ट्रे ॥ त्रि० खलपूः ॥ स्त्रियांवहुकरा ॥ वहुकार्यकर्त्तरि ॥ वहुकरोतिभुवंसमार्ष्टि । किंयत्तद्वहुषुकृञोज्विधानमित्यच् ॥

वहुकरी । स्त्री० वहुकरभार्यायाम् ॥ पुंयोगलक्षणोङीष् ॥ सम्मार्जन्याम् ॥

वहुकर्णिका । स्त्री० आखुकर्ण्याम् ॥

वहुकूर्चः । पुं० मधुनालिकेरके ॥

वहुक्षमः । पुं० वुद्धे ॥ वहुक्षमते । पचाद्य० । ईषिचमिभ्याञ्चेतिणः ॥

वहुगन्धम् । न० त्वचे ॥ पुं० कुन्दुरुके ॥

वहुगन्धदा । स्त्री० कस्तूर्याम् ॥

वहुगन्धा । स्त्री० चम्पककलिकायाम् ॥ यूथिकायाम् ॥ कृष्णजीरके ॥

वहुगर्ह्यवाक् । त्रि० कुत्सितवहुवादिनि ॥ जल्पाके ॥ वहुगर्ह्यावागस्य ॥

वहुग्रन्थिः । पुं० झावुके ॥ वहवोग्रन्थयोयस्मिन् ॥

वहुच् । पुं० प्रत्ययविशेषे ॥ सचप्रकृतेः पूर्वंभवति० प्रकृतेर्लिङ्गंचभजते । स्यादीषदसमाप्तौतुवहुच्प्रकृतिलिङ्गकः ॥

वहुच्छिन्ना । स्त्री० कन्दगुडूच्याम् ॥

वहुतन्त्रीः । त्रि० वहुतन्त्रीविशिष्टे ॥ यथा । वहुतन्त्रीःकायः । वहुतन्त्रीर्ग्रीवा । वहुतन्त्रिशरीरम् ॥ वह्व्यस्तन्त्र्योयस्मिन् । नाडीतन्त्र्योःस्वाङ्गे० ङ० नकप् ॥

वहुतन्त्रीकः । पुं० वहुतन्त्रविशिष्टे । यथा । वहुतन्त्रीकः पटः । वहुतन्त्रीकावीणा ॥ वहुतन्त्रीकंवासः । वह्व्यस्तन्त्र्योयस्मिन्कप् ॥

वहुतरकणिशः । पुं० रागीधान्ये ॥

वहुता । स्त्री० वहुत्वे ॥

वहुतिक्ता । स्त्री० काकमाच्याम् ॥

वहुतिथः । त्रि० वहुसङ्ख्याके ॥ वहूनांपूरणः । तस्यपूरणेडट् । वहुपूगगणसङ्घस्यतिथुक् ॥

वहुतृणम् । न० तृणकल्पे ॥ ईषदसमाप्तं तृणम् । विभाषासुपोवहुच्पुरस्तात् ॥

वहुत्वम् । न० वहुतायाम् ॥ वहोर्भावः । तस्यभावस्त्वतलौ ॥

वहुत्वक्कः
वहुत्वक् } पुं० भूर्जद्रुमे ॥

वहुदुग्धः । पुं० गोधूमे ॥

वहुदुग्धा । स्त्री० वञ्जुलायाम् । वहुक्षीरायांगवि ॥ वहुदुग्धंयस्याम् ॥

बहुदुग्धिका । स्त्री० स्नुहीवृक्षे ॥

बहुधा । अ० अनेकप्रकारे ॥ बहव : प्रकारा: । सङ्ख्यायाविधार्थेधावा ॥ यद्वा । बहुवारान् ० इति० क्रियाभ्यावृत्तिगणने० विभाषावहोर्धाऽविप्रकृष्टकालइतिधा । बहुधावहुकृत्वोवा दिवसस्यभुङ्क्ते ॥

बहुधान्य : । पुं० वत्सरविशेषे ॥ सुभिक्षंक्षेममारोग्यं प्रशान्ता : पार्थिवा : प्रिये । तस्करोपहृतंवित्तं बहुधान्येवरानने ॥ १२ ॥ अतिशस्य धान्यविशिष्टे ॥

बहुधारम् । ... शीर्षम् । ... न० वज्रे ॥

बहुनाडि : । त्रि० काये ॥ नाडीतन्त्र्यो : स्वाङ्गइतिनकप् ॥

बहुनाडीक : । त्रि० स्तम्भे ॥ दिवसे ॥ बह्व्योनाड्योयस्मिन् । कप् ॥

बहुनाद : । पुं० शङ्खे ॥

बहुनामा । पुं० असङ्ख्यातनामनि परमेश्वरे ॥ बहूनिनामानियस्य ॥ सर्वाण्येतानिनामानिपरस्यब्रह्मणो हरेरितिपुराणोक्ते : ॥

बहुपट : । त्रि० ईषद्‌नेपटौ ॥ बहुपु कर्मसुदक्षे ॥

बहुपत्र : । पुं० पलाण्डौ ॥ न० अभ्रके ॥ त्रि० अनेकपत्रयुक्ते ॥

बहुपत्रा । स्त्री० तरुणीपुष्पे ॥

बहुपत्रिका । स्त्री० भूम्यामलक्याम् ॥ मेथिकायाम् ॥ महाशतावर्याम् ॥

बहुपत्री । स्त्री० लिङ्गिन्याम् ॥ गृहकन्यायाम् ॥ तुलस्याम् ॥ जतुकाकायाम् ॥ वृहत्याम् ॥ गोरक्षदुग्धायाम् ॥

बहुपर्ण : । पुं० सप्तच्छदवृक्षे ॥ त्रि० अनेकपत्रयुक्ते ॥

बहुपर्णिका । स्त्री० आखुकर्ण्याम् ॥

बहुपर्णी । स्त्री० मेथिकायाम् ॥

बहुपात् । पुं० वटवृक्षे ॥ बहव : ... पादा यस्य । सङ्ख्यासुपूर्वस्य ॥

बहुपाद : । पुं० वटवृक्षे ॥

बहुपुत्र : । त्रि० अनेकसुतविशिष्टे ॥

बहुपुत्रा । स्त्री० भूम्यामलक्याम् ॥

बहुपुत्री । स्त्री० शतमूल्याम् ॥

बहुपुष्प : । पुं० पारिभद्रवृक्षे ॥

बहुपुष्पिका । बहुपुष्पी । स्त्री० धातक्याम् ॥

बहुप्रज : । पुं० मुञ्जतृणे ॥ शूकरे ॥ त्रि० अनेकसन्तानयुक्ते ॥

बहुप्रतिज्ञ : । पुं० अनेकपदसङ्कीर्णपूर्वपक्षविशिष्टव्यवहारे ॥ त्रि० अनेकप्रतिज्ञायुक्ते ॥

बहुप्रद : । त्रि० अतिदातरि । वदान्ये । दानशौण्डे ॥ बहुप्रददाति । प्रेदाज्ञइतिक : ॥

बहुप्रसू : । स्त्री० कृमिलायाम् । बहुसन्तानप्रसवकारिण्याम् ॥

बहुफल : । पुं० कदम्बे । नीपे ॥ वि

कङ्कते ॥ तेज : फले ॥

बहुफला । स्त्री॰ भूम्यामलक्याम् ॥ चविकायाम् ॥ माषपर्ण्याम् ॥ काकमाच्याम् ॥ त्रपुष्याम् ॥

बहुफलिका । स्त्री॰ भूबदर्याम् ॥

बहुफली । स्त्री॰ आमलक्याम् ॥ मृगेर्वारौ ॥

बहुफेना । स्त्री॰ सातलायाम् ॥

बहुबल : । पुं॰ सिंहे ॥ त्रि॰ अतिशयबलयुक्ते ॥

बहुमञ्जरी । स्त्री॰ तुलस्याम् ॥

बहुमत : । त्रि॰ बहूनांसम्मते॥ नात्यन्तंसंस्कृतेनैवनात्यन्तंदेशभाषया । कथांगोष्ठीषुकथयँल्लोकेबहुमतोभवेत् ॥

बहुमल : । पुं॰ सीसके ॥ त्रि॰ अनेकमलयुक्ते ॥

बहुमार्ग : । पुं॰ न॰ चत्वरे ॥ बहूनां मार्ग : सञ्चाहारोवा । त्रि॰ अनेकपथयुक्ते ॥

बहुमूर्ति : । स्त्री॰ वनकार्पासे ॥ त्रि॰ नानाकारे ॥

बहुमूर्द्धा । पुं॰ विष्णौ ॥

बहुमूल : । पुं॰ इक्कटे ॥ शिग्रौ ॥ स्थूलशरे ॥ त्रि॰ अनेकमूलयुक्ते ॥

बहुमूलक : । पुं॰ इक्कटे ॥ न॰ उशीरे ॥

बहुमूला । स्त्री॰ शतावर्याम् ॥

बहुमूली । स्त्री॰ गाकन्याम् ॥

बहुमूल्य : । त्रि॰ महाधने । महार्घवस्तुनि ॥

बहुयाज्य : । पुं॰ अनेकयजमाने ॥ बहवोभूयांसोयाज्यायाजनीयायस्य ॥

बहुरश्मिका । स्त्री॰ मेदायाम् ॥

बहुरसा । स्त्री॰ महाज्योतिष्मत्याम् ॥

बहुरुहा । स्त्री॰ कन्दगुडूच्याम् ॥

बहुरूप : । पुं॰ शिवे ॥ विष्णौ ॥ धूनके । सर्जरसे ॥ सरटे ॥ स्मरे । कामदेवे ॥ ब्रह्मणि ॥ कुन्तले । केशे ॥ बुद्धप्रभेदे ॥ बालयुवादिरूपिदेवनरादिरूपिजीवे ॥ बहुरूपइवभातिसाकथाबहुरूपया । रममाणोगुणेष्वस्याममाहमितिमन्यते ॥ नानाकृतिगन्धत्वात्॰ बहूनिरूपाण्यस्य ॥ त्रि॰ नानारूपयुक्ते ॥

बहुरूपक : । पुं॰ जाहकजन्तौ ॥

बहुरूपा । स्त्री॰ दुर्गायाम् ॥

बहुरेखा। स्त्री॰ प्रचुरदीर्घचिह्नायाम्॥ बहुरेखायुक्तायाःस्त्रियादोषोयथा । रेखाभिर्बहुभि : क्लेशंस्वल्याभिर्धनहीनताम् । रक्ताभि : सुखमाप्नोतिकृष्णाभि:प्रेष्यतांव्रजेत् ॥

बहुला: । पुं॰ ब्रह्मणि ॥

बहुलोमा । पुं॰ मेषे ॥ त्रि॰ लोमशे ॥

बहुल : । पुं॰ अग्नौ ॥ कृष्णपक्षे ॥ न॰ विहायसि । आकाशे ॥ सितमरिचे ॥ त्रि॰ प्राज्ये ॥ कृष्णवर्णे ॥ बहून्अर्थान्लाति । ला॰ । आतो

नुपेतिकः ॥ बहूनिबीजानिलातिवा ॥

बहुलगन्धा । पुं० एलायाम् ॥

बहुलच्छदः । पुं० रक्तशिग्रौ ॥

बहुलवणम् । न० औषरके ॥

बहुलवल्कलः । पुं० भूर्ज्जे ॥ चारे पियाले ॥

बहुला । स्त्री० नीलिकायाम् ॥ एलायाम् ॥ गवि । धेनौ ॥ देवीविशेषे ॥ टाप् ॥

बहुलाः । स्त्री० भूम्नि० कृत्तिकासु ॥

बहुलिमा । पुं० । बहुलत्वे ॥ बहुलस्यभावः । इमनिच् ॥

बहुलीकृतम् त्रि० अपनीततुच्छधान्ये धान्यादौ । पूते ॥ अबहुलंबहुलमकारि । अभूततद्भावेच्विः । अस्यच्वौ ॥

बहुवचनम् । न० येनबहवोर्थाउच्यन्ते तस्मिन् ॥ बहूनामर्थानांवचनम् । वचेः करणेल्युट् । कर्मणिषष्ठ्या समासः ॥

बहुवल्कः । पुं० प्रियाले ॥

बहुवल्ली । स्त्री० डोडिचुपे ॥

बहुवारः । पुं० उद्दाले । शेलौ । श्लेष्मातके । लसोडा० इ० भा० ॥ बहुवारोविषस्फोटव्रणवीसर्पकुष्ठनुत् । मधुरस्तुवरस्तिक्तः केश्यश्चकफपित्तहृत् ॥ फलमामन्तुविष्टम्भि रूक्षंपित्तकफास्त्रजित् । तत्पक्वं मधुरंस्निग्धंश्लेष्मलंशीतलंगुरु ॥

बहुवारकः । पुं० श्लेष्मातके । बहुवारे ॥ बहून्वारयति । हञ्० । णिजन्तः । कृन्शिल्पिसंज्ञयोरपूर्वस्यापि ॥

बहुविधः । त्रि० विविधे । नानारूपे । पृथग्विधे ॥ बहवोविधायस्य ॥

बहुविस्तीर्णा । स्त्री० कुचिताकाम् ॥

बहुवीजम् । न० गण्डगात्रे । आढ्ये ॥

बहुवीर्यः । पुं० विभीतके ॥ तण्डुलीयशाके ॥ शाल्मलिवृक्षे ॥ मरुवे ॥

बहुवीर्या । स्त्री० भूम्यामलक्याम् ॥

बहुव्रीहिः । पुं० प्रायोन्यपदार्थप्रधानेसमासविशेषे ॥ सचसप्तधा । द्विपदः । बहुपदः संख्योत्तरः संख्योभयपदः दिगन्तरालक्षणः व्यतिहारलक्षणः सहपूर्वपदश्चेतिभेदात् ॥ त्रि० प्रचुरधान्ययुक्ते ॥

बहुशत्रुः । पुं० चटके ॥

बहुशल्यः । पुं० रक्तखदिरे ॥ त्रि० अनेकशल्ययुक्ते ॥

बहुशः । अ० भूरिशब्दार्थे ॥ बहूनि । बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥

बहुशाखः । त्रि० अनेकभेदे ॥

बहुशालः । पुं० स्नुह्याम् ॥

बहुशिखा । स्त्री० जलपिप्पल्याम् ॥

बहुश्रवा । स्त्री० शल्लकीतरौ ॥

बहुसन्ततिः । पुं० त्वक्सारप्रभेदे ।

विद्वांस० दु० गौ० आ० ॥ त्रि० अनेकसन्तानवति ॥
बहुसम्पुट : । पुं० विष्णुकन्दे ॥
बहुसार : । पुं० खदिरे ॥
बहुसुता । स्त्री० शतमूल्याम् ॥
बहुसू: । स्त्री० शूकर्याम् ॥ बहुप्रसवायाम् ॥
बहुसूति : स्त्री० परेष्टुकायाम् । बह्व पत्यायांगवि ॥ बह्वीसूतिर्यस्या: ॥ बहुसन्तानप्रसवायाम् ॥
बहुस्रवा । स्त्री० शल्लकीवृक्षे ॥ नाना स्रवणशीलायाम् ॥
बहुस्वन : । पुं० पेचके ॥ त्रि० अनेक शब्दयुक्ते ॥
बह्वपत्य : । पुं० शूकरे ॥ मूषके ॥ त्रि० बहुसन्तानयुक्ते ॥
बह्वाशी । त्रि० बहुभोजनशीले ॥ बह्वा शाविशिष्टे ॥
बह्वी । स्त्री० बह्वर्थे । बह्वादित्वान् ङीष् ॥
बह्वृक् । स्त्री० ऋग्वेदे ॥ न० सूक्त विशेषे ॥
बह्वृच : । पुं० ऋग्वेदिनिब्राह्मणे ॥ बह्व्यऋचोऽध्येतव्यायेन । ऋक्पूरित्य : ॥
बव्हृची । स्त्री० अध्वर्य्याम् । अध्वर्युशाखाध्येत्र्याम् ॥ बह्व्यऋचो-ध्येतव्याययासेतिविग्रह : । अनृच बह्वृचावध्येतर्य्येवेतिवचनात् ० ऋक्पूरित्यप्रत्यय : समासान्त : । यद्यपि० स्त्रीणांस्वाध्यायाध्ययन प्रतिषिद्धम् ० तथापिपुराकल्पेच्छ तदासीत् । यथा । पुराकल्पेषु नारीणांमौञ्जीबन्धनमिष्यते । अध्यापनञ्च वेदानां साविचीवच नंतर्थेतियमवचनात् ॥ गोत्रञ्च चरणै : सहेतिजातित्त्वान् ङीष् ॥
वा । स्त्री० गते ॥ गन्धने ॥ तन्तुवं तामे ॥
वाढम् । न० दृढे ॥ प्रतिज्ञायाम् ॥ भृशे । अतिशये ॥ वाहते । वाहृ प्रयत्ने । ओष्ठादि : । गत्यर्थेति क्तप्रत्यये० क्षुब्धस्वान्तेतिनिपातितम् । त्रि० अतिशयिनि ॥ क्रिया विशेषणेऽस्यक्लीबत्वम् । द्रव्यविशेषणत्वेतुवाच्यलिङ्गत्वम् ॥
वाण : । पुं० पश्चयवर्गे ।
वाणि : । स्त्री० वस्त्रादीनांवपनक्रियायाम् । व्यूतौ ॥
वाणिज : । पुं० वणिजि ॥ वाडवाऽग्नौ ॥ पणते । पण० । पणेरिज्या देश्चव : । स्वार्थेप्रज्ञाद्यण् ॥
वाणिजक : । पुं० वणिजि । वाडवाग्नौ । धूर्त्ते ॥
वाणिज्यम् । न० सत्यानृताख्यवैश्यवृत्तौ । वणिज्यायाम् । क्रयविक्रयादिलक्षणे वणिजकर्म्मणि । वणिजांकर्म्मभावोवा । ब्राह्मणादित्वा

| बाधक : | बाधित : |
|---|---|

त्थ्यञ्च् ॥
वाणिनी । स्त्री० नर्त्तक्याम् ॥ छेकायाम् । मत्तयोषायाम् ॥ विदग्धवनितायाम् । अवश्यं वणति । वणशब्दे । आवश्यकेति० ग्रह्यादित्वाद्दणिनिः । बवयोरैक्यं ॥
वाणी । स्त्री० वाण्याम् ॥
बाधः । पुं० प्रतिबन्धके । व्याघाते ॥ अन्वयानुपपत्तौ ॥ अतिदिष्टपदार्थनिवृत्तौ ॥ ज्ञानान्तरेणविषयासत्त्वप्रतीतौ ॥ न्यायमते साध्याभाववत्पक्षे ॥ य० । ह्रदोवह्निमान् ॥
बाधकः । पुं० प्रतिबंधके ॥ आधिक्यं बाधकत्वे हेतुः । बाधते । बाधृ० । ण्वुल् ॥ स्त्रीणांरोगविशेषे ॥ यथा । रक्तमाद्रीतथाषष्ठीचाङ्कुरो जलकुमारकः । चतुर्विधोबाधकः स्यात् स्त्रीणांमुनिविभाषितः ॥ तेषांस्वभावंवक्ष्यामियथाशास्त्रंविधानतः । एतेषांपूजनंकार्यंजनैः सन्तानकाङ्क्षिभिः ॥ निःसारणंस्थापनञ्चबलिदानंजपस्तथा कर्त्तव्यो गुरुवाक्येन यथाशास्त्रं विचक्षणैः ॥ चतुर्विधोबाधकस्तुजायतेऋतुकालतः । तस्य लक्षणंयथा । व्यथाकट्यांतथानाभेरधः पार्श्वेस्तनेऽपिच । रक्तमाद्रीप्रदोषेणजायतेफलहीनता । मास-

द्वयंत्रयंवापिऋतुर्योगोभवेद्यदि । रक्तमाद्रीप्रदोषेणफलहीनातदाभवेत् ॥ इतिरक्तमाद्या:नेत्रेहस्तेभवेज्ज्वालायोनौचैवविशेषतः । लालासंयुतरक्तञ्चषष्ठीबाधकयोगतः ॥ मासैकेनभवेद्यस्याऋतुज्ञानंद्वयंतथा । मलिना रक्तयोनिःस्यात् षष्ठीबाधकयोगतः ॥ इतिषष्ठ्याः ॥ उद्वेगोगुरुतादेहेरक्तस्रावोभवेद्बहु । नाभेरधोभवेच्छूलंचाङ्कुरः सतुबाधकः ॥ ऋतुहीनाचतुर्मासंत्रिमासंवाभवेद्यदि । कृशाङ्गीकरपादेचज्वालाचाङ्कुरयोगतः ॥ इतिचाङ्कुरः ॥ सशूलाचसगर्भाचशुद्धदेहाल्परक्तिका । जलकुमारस्यदोषेणजायते बलहीनता ॥ याकृशाङ्गीभवेत्स्थूलाबहुकालऋतुस्तथा । गुरुस्तनीस्वल्परक्ता जलकुमारस्यदूषणात् ॥ इतिजलकुमारस्य ॥ इतिवैद्यकम् ॥ त्रि० बाधाजनके ॥
बाधनम् । न० पीडायाम् ॥ प्रतिबंधके ॥
बाधा । स्त्री० दुःखे । पीडायाम् ॥ निषेधे ॥ बाधृलोडने । गुरोश्चहलः ॥
बाधितः । पुं० हेत्वाभासविशेषे ॥ यस्य साध्याभावः प्रमाणेननिश्चितः स बाधितः । यथा । वह्निरनुष्णोद्रव्यत्वादिति । अत्रानुष्णत्वंसाध्याभावः । उष्णत्वंस्पर्शेनप्रत्यक्षेणगृह्यते०इ-

तिबाधितत्वम् ॥ त्रि॰ बाधायुक्ते ॥ पीडिते ॥ तारकादित्वादितच् । निवृत्ते ।

वाधिर्य्यम् । न॰ वधिरत्वे ॥ वधिरस्य भाव : । ष्यञ् ॥ कर्णरोगविशेषे । तस्यनिदानम् वधिरेऽवलोकनीयम् । औषधन्तु । शुष्कमूलकशुण्ठीनां क्षारोहिङ्गुलनागरम् । शुक्तं चतुर्गुणंदद्यात्तैलमेतैर्विपाचयेत् ॥ वाधिर्य्यंकर्णशूलञ्चपूयस्रावश्चकर्णयो : । क्रमयश्चविनश्यन्ति तैलस्यास्यप्रपूरणात् ॥

वाध्य : । त्रि॰ निराकरणयोग्ये । वाधितव्ये । बाधनीये ॥ न्यूनत्वं बाध्यत्वे हेतु : ॥

बांधकिनेय : । पुं॰ वंधुले । असतीसुते ॥ कौलटेये ॥ बंधक्याअपत्यम् । स्त्रीभ्योढकिकल्याण्यादित्वादिनङादेशश्च ॥

बांधव : । पुं॰ मित्रे । सुहृदि ॥ सगोत्रे । बंधौ । ज्ञातौ । स्वजने ॥ बांधवास्त्रिविधा: । आत्मबांधवा:॰पितृबांधवा:॰मातृबांधवाश्चेति । यथोक्तम् । आत्मपितृष्वसु : पुत्राआत्ममातृष्वसु : सुता : । आत्ममातुलपुत्राश्चविज्ञेयाह्यात्मबांधवा : ॥ पितु : पितृष्वसु : पुत्रा : पितुर्मातृष्वसु : सुता : । पितुर्मातुलपुत्राश्च विज्ञेया : पितृबांधवा : ॥ मातु : पितृष्वसु : पुत्रामातुर्मातृष्वसु : सुता : । मातुर्मातुलपुत्राश्चविज्ञेया मातृबांधवा: ॥ इति ॥ बंधुरेव । प्रज्ञाद्यण् ॥

बाभ्रवी । स्त्री॰ दुर्गायाम् ॥ पवीम् ॥

वारक : । पुं॰ अश्वगतौ ॥ त्रि॰ निषेधके ॥

बारकी । पुं॰ शत्रौ ॥ चित्राश्वे ॥ पर्णाजीविनि ॥ पयोधौ ॥

वारकोर : । पुं॰ द्वारग्राहिणि ॥ वाडवे ॥ यूकायाम् ॥ वेणिवेधिन्याम् ॥ नीराजितहये ॥

वारण : । पुं॰ मतङ्गजे ॥ न॰ प्रतिषेधे ॥

बारबाण : । पुं॰ कञ्चुके ॥

वार्वटीर : । पुं॰ रङ्गे । त्रपुणि ॥ आम्रास्थ्नि ॥ अङ्कुरे ॥ गणिकासुते ॥

वाल: । पुं॰ कुन्तले । चिकुरे । कचे ॥ ॥ अश्वस्यबालके । किशोरे ॥ अश्वस्य वालधौ ॥ इभपुच्छे ॥ नारिकेले ॥ पञ्चवर्षीयहस्तिनि ॥ य॰ । पञ्चवर्षो गजोवाल : स्यात्पोतोदशवर्षक: । इति ॥ पुच्छे ॥ मत्स्यविशेषे ॥ पुं॰ न॰ ह्रीवेरे । वर्हिष्ठे । उदीच्ये । वाला॰ इ॰ प्र॰ गन्धद्रव्ये । सुगन्धिवाला॰ इ॰ च॰ भा॰ ॥ त्रि॰ मूर्खे ॥ अविवेकिनि । शास्त्रार्थविवेकज्ञानशून्ये । अल्पप्रज्ञे ॥ अर्भ

के । माणवके ॥ अप्रामाण्यव्यवहारे । पञ्चदशवर्षादनधिकवयस्के इतिकश्चित् । षोडशवर्षपर्यन्तप्रथमवयस्के ॥ यथा । आषोडशाद्भवेद्बालो-यावत्क्षीरनिवर्त्तकः । इ० ॥ अत्र सुश्रुतः । जनषोडशवर्षस्तुनरोबालोनिगद्यते त्रिविधःसोपिदुग्धाशी दुग्धान्नाशीतथान्नभुक् । दुग्धाशीवर्षपर्यन्तंदुग्धान्नाशीशरद्द्वयम् । तदुत्तरंस्यादन्नाशीएवंबालस्त्रिधामतइति ॥ अन्यचाप्युक्तम् । आषोडशाद्भवेद्बालस्तरुणस्ततउच्यते वृद्धः स्यात् सप्ततेरूर्द्ध्वंवर्षीयान्नवतेः परम् ॥ इ० ॥ अनाथबालवृद्धानांरक्षिकाःसर्वदेवताः ॥ अथबालपरिचर्याविधिः । बालमङ्कसुखंदद्यान्नचैनंतर्जयेत्क्वचित् । सहसाबोधयेन्नैवनायोग्यमुपवेशयेत् ॥ अयोग्यमुपवेशनासमर्थम् । नाकृष्यस्थापयेत्क्रीडेनत्रिप्रंश्रयनेक्षिपेत् । रोदयेन्नक्वचित्कार्येविधिमावश्यकंविना ॥ आवश्यकोविधिर्भेषजदानतैलाभ्यङ्गोद्वर्त्तनादिः । तच्चित्तमनुवर्त्तेतसंसदैवानुमोदयेत् । संसेवितमनाएवंनित्यमेवाभिवर्द्धयेत् ॥ बालातपतडिद्दृष्टिधूमानलजलादितः । निम्नोच्चस्थानतश्चापिरक्षेद्बालंप्रयत्नतः ॥ बालस्यस्नभाग्रहितान्याह । अभ्यङ्गोद्वर्तनेस्नानंनेत्रयोरञ्जनंतथा । वस्त्रं मृदुयत्नतश्चतथाचन्दनानुलेपनम् ॥ जन्मप्रभृतिपथ्यानिबालस्यैतानि-सर्वथा ॥ बालस्यकवलादेः समयमाह । कवलः पञ्चमाद्वर्षाद्विंशतेश्चैवमैथुनमिति ॥ बलति । बलप्राणने । ज्वलितीतिणः ॥ बाडते । बाडृआप्लाव्ये । पचाद्यच्वा ॥ यद्वा । बल्यते । बलसंवरणे । कर्मणिघञ् ॥ बालयति ण्यन्तात्पचाद्यच्वा ॥ जनैकादशवर्षस्यपञ्चवर्षाधिकस्यच । चरेद्गुरुः सुहृद्वापि प्रायश्चित्तंविशुद्धये ॥ ततोन्यूनतरस्याथनापराधोनपातकम् । नचास्यराजदण्डोपिप्रायश्चित्तंनविद्यत इत्यङ्गिराः ॥

बालकः । पुं० शिशौ ॥ अश्वे ॥ हयबालधौ ॥ हस्तिपुच्छे ॥ अङ्गुरीयके ॥ ह्रीवेरे । सुगन्धिबाला० इ० प्र० ॥ बालकंशीतलंरूक्षंलघुदीपनपाचनम् । हृल्लासारुचिवीसर्पहृद्रोगस्त्वतिसारहृत् ॥ वलये । केशे ॥ त्रिवे० ॥

बालकप्रिया । स्त्री० इन्द्रवारुण्याम् ॥ कदल्याम् ॥

बालकृमिः । पुं० केशकीटे ॥

बालक्रीडनम् । न० बालकखेलायाम् ॥

बालक्रीडनकः । पुं० कपर्द्दके ॥

बालखिल्यः । पुं० तपोविशेषलब्ध-

संज्ञकेतापसान्तरे । नवान्नलब्धे पूर्वसञ्चितस्त्यागिनि ॥ मुनिविशेषेषु ॥ केशजातावालखिल्या : ॥ येके शास्ते बालखिल्या इतिस्मृतेः ॥
बालगर्भिणी । स्त्री० प्रथमगर्भव-त्यां गवि । प्रष्ठौह्याम् ॥ बालाचासौगर्भिणीच ॥
बालगोपाल : । पुं० श्रीकृष्णमूर्त्ति विशेषे ॥
बालग्रह : । पुं० बालकष्टदग्रहविशेषे ॥ यथा बालग्रहाश्चनाचारात्पीडयन्तिशिशुंयत : । तस्मात्तदुपसर्गेभ्योरक्षेद्बालंप्रयत्नत : ॥ ग्रयतेषांनामानि । स्कन्दग्रहस्तुप्रथम : स्कन्दापस्मारएवच । शकुनीरेवती चैवपूतनागन्धपूतना । पूतनाशीतपूर्वाचतथैवमुखमण्डिका । नव मोनैगमेयश्चप्रोक्ताबालग्रहाश्चमी ॥
बालचर्य्य : । पुं० सिद्धसेने ॥ कार्त्तिकेये ॥
बालजीवनम् । न० क्षीरे । दुग्धे ॥
बालतनय : । पुं० खदिरे ॥ बाला : तनया : पत्राण्यस्य ॥ बालकपुत्रे ॥
बालतन्त्रम् । न० कुमारभृत्यायाम् । गर्भिण्यवेक्षणे । बालचिकित्सायाम् ॥
बालतृणम् । न० शष्पे । नवतृणे ॥ बालतृणम् ॥
बालधि : । पुं० केशसंयुते० लाङ्गूले ॥ बालाधीयन्तेऽत्र । करणाधिकरणे तिक्ति : ॥
बालपत्र : । पुं० खदिरे ॥ यवासे ॥ दुरालभायाम् ॥ न० नूतनपर्णे ॥
बालपत्रक : । पुं० खदिरवृक्षे ॥
बालपाश्या । स्त्री० पारितथ्यायाम् । सीमन्तस्थितायांस्वर्णादिपट्टिकायाम् ॥ बन्दी० वेणी० इ० भा० । सिंति० इ० गौ० भा० ॥ बालपाशे ॥ केशसमूहेसाधु : । तत्रसाधुरितियत् ॥ बालेषुपाश्यापाशसमूहोवा ॥
बालपुष्पिका । बालपुष्पी । स्त्री० ☞ यूथिकायाम् ॥
बालभद्र : । बालभद्रक : । पुं० विषभेदे । शाम्भवे ॥
बालभैषज्यम् । न० रसाञ्जने ॥ बालौषधे ॥
बालभोज्य : । पुं० चणके ॥ त्रि० बालकभक्षणीये ॥
बालमुकुन्द : । पुं० श्रीविष्णोर्मूर्त्यन्तरे ॥ यथा । करारविन्देनपदारविन्दं मुखारविन्देविनिवेशयन्तम् । वटस्यपत्रस्यपुटेशयानंबालंमुकुन्दंमनसास्मरामि ॥
बालमूलकम् । न० लघुमूलके ॥ मूलकंबालकंरुच्यंस्वर्योष्णं पाचनंलघु । दोषत्रयज्वरश्वासनासाकण्ठाक्षिरोगनुत् ॥ महत्तदेवरूक्षोष्णं गुरुदोषत्रयप्रदम् । स्नेहसिद्धंतदेवस्याद्दोषत्रयविनाशनम् ॥

बालमूषिका । स्त्री० गिरिकायाम् ॥ बालाचासौमूषिकाच ॥

बालयज्ञोपवीतम् । न० उपवीतविशेषे । उरस्त्रटे । पञ्चवटे ॥

बालयज्ञोपवीतकम् । न० बालयज्ञोपवीते ॥

बालराजम् । न० वैदूर्य्यमणौ ॥ पुं० बालकश्रेष्ठे ॥

बालरोग : पुं० बालकस्यव्याधौ ॥

बालवाय: । पुं० वैदूर्य्यप्रभवे० देशविशेषे॥

बालवायजम् । न० वैदूर्य्यमणौ ॥

बालवास : । न० केशरचितवस्त्रे ॥ त्रि० तद्वति ॥

बालवाह्य : । पुं० वनच्छागे ॥ त्रि० बालकवहनीये ॥

बालव्यजनम् । न० चामरे । रोमगुच्छे । प्रकीर्णके ॥ बालव्यजनमोजस्यं मक्षिकादीन्व्यपोहति ॥ बालकस्यव्यजने ॥

बालव्रत : । पुं० पञ्चचीरे । सिंहकेलौ । मञ्जुघोषे । पूर्वजिने ॥

बालसंध्याभ : । पुं० अरुणवर्णे ॥ त्रि० तद्वति ॥

बालसूर्य्य : । पुं० उदितमात्रेऽर्के ॥ न० वैदूर्य्यमणौ ॥

बालहस्त : । पुं० केशयुतलाङ्गूलमात्रे । बालधौ ॥ बाल : ० हस्तइव० दंशादिवारकत्वात् ॥

बाला । स्त्री० त्रुट्याम् ॥ योषायाम् ॥ हरिद्रायाम् ॥ मल्लिकाप्रभेदे ॥ स्वल्पायाम् ॥ नीलझिण्ट्याम् ॥ एकवर्षवयस्कायांगवि ॥ यथा । वर्षमात्रवालाख्यादितिबालाद्विवार्षिकी ॥ षोडशवर्षीयायांस्त्रियाम् ॥ बालाषोडशवार्षिकीत्युक्तः ॥ शरदि ग्रीष्मकालेचबालाशस्ताचहर्षदा ॥ देवताविशेषे ॥ वयसिप्रथमेऽपि प्राप्ते०अजादित्वाट्टाप् ॥ घृतकुमार्याम् ॥ ह्रीवेरे ॥ कन्यायाम् ॥

बालाची । स्त्री० केशपुष्टा० इ० गौ० भा० प्र० वृक्षे । दुर्गपुष्प्याम् ॥

बालातप : । पुं० प्रथमोदितादित्यतापे ॥ कन्यार्कातपे ॥

बालार्क : । पुं० प्रातःकालिकेसूर्य्ये ॥ कन्याराशिस्थेसूर्य्ये ॥ यथा । शुष्कमांसंस्त्रियोवृद्धाबालार्कस्तरुणंदधि प्रभातेमैथुनंनिद्रासद्य : प्राणहराणिषट् ॥

बालि : । पुं० ऐन्द्रे । सुग्रीववानरभ्रातरि ॥

बालिका । स्त्री० बालायाम् । कन्यायाम् ॥ बालुकायाम् ॥ पत्रकाहलायाम् । पिप्पलोलायाम् ॥ कर्णभूषणे । बाली० इति० भा० ॥

बालिखिल्य : । पुं० ऋषिविशेषेषु ॥ पुलस्त्यकन्यायांसन्नत्यां०क्रतो : षष्टिसहस्रसङ्ख्यकपुत्रेषु ॥ तेचाङ्गुष्ठपरिमाणा : ॥

वाली । पुं॰ ऐन्द्रे । इन्द्रपुत्रे वानर राजविशेषेसुग्रीवभ्रातरि ॥ नससङ्कुचित: पन्थायेनवालीहतोगत: । समयेतिष्ठसुग्रीवमावालिपथमन्वगा: ॥ त्रि॰ वालविशिष्टे ॥

वालिनी । स्त्री॰ अश्विनीनक्षत्रे ॥

वालिपुत्र: । पुं॰ अङ्गदे । तारेये ॥

वालिमा । पुं॰ वालतायाम् ॥ वालस्वभाव: । पृ॰ इमनिच् ॥

वालिश: । त्रि॰ शिशौ । मूर्खे ॥ वालिशस्त्वमतस्त्वेवधनस्यायमधिकारी मूर्खत्वादपूज्यत्वात् । तस्येदमित्यण् ॥ वाडनम् । वाड़॰ । इन् । वालिंश्यति । शो॰ आतोनुपेतिक:॥

वालिश्यम् । न॰ मूर्खत्वे ॥ वालिशस्यकर्मभावोवा । ब्रा॰ ष्यञ् ॥

वालिहन्ता । पुं॰ श्रीरामचन्द्रे ॥

वाली । स्त्री॰ सेव्ये ॥ स्वनाम्नाप्रसिद्धे॰ अलङ्कारविशेषे ॥

वालीश: । पुं॰ मूत्रकृच्छ्ररोगे ॥

वालु: । स्त्री॰ एलवालुकनाम्निगंधद्रव्ये ॥

वालुकम् । न॰ एलवालुके ॥ वलते । वलप्राणने । वा॰ उण् । स्वार्थेकन् ॥ पुं॰ पानीयामलके ॥

वालुका । स्त्री॰ सिकतासु । वालू॰ इ॰ भा॰ ॥ वालुकालेखनीशीता ब्रणोर: चतनाशिनी ॥ टाप् ॥ कर्पूरे ॥ कर्कव्याम् ॥ यन्त्रविशेषे ॥

वालुकागड: । पुं॰ वालियामच्॰ इ॰ गौ॰ प्र॰ मत्स्ये । सिताङ्गे ॥

वालुकात्मिका । स्त्री॰ शर्करायाम् ॥ त्रि॰ वालुकामये ॥

वालुकाप्रभा । स्त्री॰ नरकविशेषे ॥

वालुकामय: । त्रि॰ सैकते ॥

वालुकायन्त्रम् । न॰ औषधपाकार्थं यन्त्रविशेषे ॥ यथा । भाण्डे वितस्तिगम्भीरेमध्ये निहितकूपके । कूपिकाकण्ठपर्यन्तं वालुकाभिश्चपूरिते ॥ भेषजंकूपिकासंस्थं वह्निनायत्रपच्यते । वालुकायन्त्रमेतद्धियन्त्रतंत्रवुधै: स्मृतम् ॥ इतिभावप्रकाश: ॥

वालुकास्वेद: । पुं॰ तप्तवालुकाभिस्तापने ॥ यथा । वातश्लेष्मकृतेस्वेदान्कारयेद्रूचनिर्मितान् । स्निग्धःस्वेदोनिविडोऽत्रविनाकेवलवातजान् ॥ खर्परभृष्टघटस्थितकाञ्जिकसंसिक्तवालुकास्वेद: । शमयतिवातकफामयमस्तकशूलाङ्गभङ्गादीन् ॥ स्रोतमांसार्द्रवंकृत्वानीत्वापाकमाशयम् । हत्वावातकफस्तम्भंस्वेदोज्वरमपोहति ॥ इ॰ भा॰ प्र॰ ॥

वालुकी । स्त्री॰ कर्कटीभेदे । बहुफलायाम् । स्निग्धफलायाम् ॥ वालुकीवातशमनीशीताद्द्वाश्रमापहा । पित्तास्रशमनीरुच्याकुरुतेकासपीनसौ ॥ स्याद्वालुकीशरदिवर्षजदोषकर्त्रीहेमन्तजाचखलुपित्तहराचरुच्या

क्षिप्रं करोति खलु पीनसमद्य पक्वापक्वात्वती वमधुराफलकारिणीच ॥ इ० रा० नि० ॥

बालुङ्का । बालुङ्की । स्त्री०) द्रूर्वारौ । कर्कव्याम् ॥

बालूक : । पुं० विषप्रभेदे ॥

बालेय : । पुं० गर्दभे ॥ रासभे ॥ अङ्गारवल्लर्याम् ॥ दैत्यविशेषे ॥ चाणक्यमूलके ॥ त्रि० मृदौ । कोमले ॥ बलिहिते । वल्यर्थे । पूजायोग्ये बलयेउपहारायहितम् । छदिरूपधिवलेर्ढञ् ॥ बलेरपत्यंवा । गृष्ट्यादित्वात् ० ढञ् ॥

बालेयशाक : । पुं० अङ्गारवल्ल्याम् । बर्वरे । भार्ग्याम् ॥ बालेयस्यशाक: । गर्दभभक्ष्यशाकत्वात् ॥

बालेष्ट : । पुं० बदरे ॥ त्रि० बालकाभिलषिते ॥

बालोपवीतम् । न० बालकपरिधानवस्त्रे । पक्षावटे ॥

बाल्मीकि : । पुं० मुनिविशेषे । रामायणवक्तरि ॥ वल्मीकस्यनाकोरपत्यम् । वल्मीकप्रभवोयस्मात्तस्माद्वाल्मीकिरित्यसाविति ब्रह्मवैवर्तोक्ते र्वल्मीकप्रभवत्वेनगौणपुत्रादिवद्गौणमस्यवल्मीकापत्यत्वंगृहीत्वैवसाधुरपत्यार्थ : ॥ यद्वा । वल्मीकइति० ऋषिविशेषस्यसंज्ञेत्व.इ : ॥

बाल्मीकीय : । त्रि० बाल्मीकिसम्बन्धिनि । तस्येदमित्यर्थे । वृद्धाच्छ : ॥

बाल्यम् । न० अवस्थाविशेषे । शैशवे ॥ तिथितत्त्वेमतंबाल्यमित्युक्तः : पञ्चदशवर्षपर्यन्तावस्थायामित्यर्थः : ॥ चापल्ये ॥ ज्ञानिनोवस्थाविशेषे । ज्ञानमनाविष्कुर्वन्नगर्वितत्वे । दम्भदर्पाहङ्कारादिराहित्ये । युक्तित: श्रुतार्थानुसन्धानकुशलत्वे ॥ बालस्यभाव : कर्मवा । । ब्राह्मणादित्वात्ष्यञ् । पुरोहितादित्वाद्यग्वा ॥

बाष्प : । पुं० न० नेत्रजले ॥ ऊष्मणि ॥ बाधतेनेत्रम् । बाधृ० । खष्पशिल्पशष्पबाष्परूपपर्पतल्पा : । इति पप्रत्यय : ॥ धातो : षादेशश्चनिपात्यते ॥ बाष्पमूष्माश्रु० इत्यमर: ॥

बाहु : । पुं० स्त्री० कक्षादङ्गुल्यग्रपर्यन्तावयवविशेषे । भुजे । प्रवेष्टे । दोष्णि । बाहः० इ० भा० ॥ अस्यशुभाशुभलक्षणंयथा । उद्बद्धबाहु : पुरुषोवधबन्धमवाप्नुयात् । दीर्घवाहुर्भवेद्राजा समुद्रवचनंयथा ॥ प्रलम्बबाहुरैश्वर्यंप्राप्नुयाद्बहुमानसंयुतम् । ह्रस्वबाहुर्भवेद्दास : परप्रेष्यकरस्तथा । वामावर्तभुजायेतुयेचदीर्घभुजानर : ॥ संपूर्णबाहवोयेतुराजानस्तेप्रकीर्तिता इति० ॥ कूर्परस्योर्द्धभागे ॥ बाधते । बाधृ० । अर्जिदृशिकम्यमिपशिबाधामृजिपशितुक्

धुक्दीर्घश्चकाराश्चेतिक्सुईस्याऽनृत्यस्य ॥ सगणे० पुं० ॥ रवेः पार्श्वगे ॥

वाहुकः । पुं० नलाभिधनृपे । पुण्यश्लोके । अश्वविदि । नैषधे ॥ त्रि० वाहुभ्यांतरतियस्तस्मिन् ॥ नौद्व्यचष्ठन् । स्त्रियाम्० । वाहुका ॥

वाहुकुण्ठः । त्रि० कुण्ठितवाहुयुक्ते । कुम्रे । टोगंडी ॥

वाहुकुन्थः । पुं० गरुति । पक्षे । पतत्रे । पङ्ख० द्रु० भा० ॥

वाहुजः । पुं० क्षत्रिये । कीरे ॥ स्वयञ्जाततिले ॥ त्रि० वाहुजाते ॥ वाहुभ्यांजातः । पञ्चम्यामजातावितिडः ॥ वाह्वोर्जातोवा । सप्तम्यांजनेर्डः ॥

वाहुत्राणम् । न० अस्त्राघातवारणार्थंवाहुबद्धलौहादौ । वाहुले ॥

वाहुदन्ती । पुं० इन्द्रे ॥

वाहुदा । स्त्री० तीर्थविशेषे ॥ सैतवाहिन्यांनद्याम् ॥ कदाचिल्लिखितस्यर्षेर्भ्रातुः शून्याश्रमेफलभक्षणाद्राज्ञावाहुच्छिन्नौ०लौचास्यांतपस्यतस्तस्यजाताबित्यत; ०वाहू० छिन्नौदत्तवतीलिखितस्यर्षेः । डुदाञ्० । आतोनुपेतिकः ॥ यद्वा । वहुदस्यकार्त्तवीर्यस्येयम् । तेनावतारितत्वात् । तस्येदमित्यण् ॥

वाहुभूषा । स्त्री० केयूरे ॥ वाहुभूषणमात्रे ॥

वाहुमूलम् । न० कक्षे । काख० द्रु० भा० ॥ वाह्वोर्मूलम् ॥

वाहुयुद्धम् । न० नियुद्धे । दोर्भ्याम् सङ्ग्रामे । वाहुभियुद्धम् ॥

वाहुलः । पुं० कार्त्तिकमासे । ऊर्ज्जे ॥ वहुलाकृत्तिका० तयायुक्तापौर्णमासी० वाहुली । वाहुलीपौर्णमाऽस्मिन् । सास्मिन्पौर्णमासीत्यण् ॥ अग्नौ ॥ शाक्यमुनेः सुते । यशोधरेये ॥ न० वाहुत्राणे ॥

वाहुलकम् । न० प्राचुर्य्ये ॥ यथा । क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव । विधेर्विधानम् वहुधासमीक्ष्य चतुर्विधंवाहुलकंवदन्ति ॥ वहुलस्यभावः । द्वन्द्वमनोज्ञादिभ्यश्चेतिवुञ् ॥

वाहुलेयः । पुं० कार्त्तिकेये । गुहे । स्कन्दे ॥ वहुलानां कृत्तिकानामपत्यम् । स्त्रीभ्योढक् ॥

वाहुल्यम् । न० वहुत्वे ॥ वहुलस्यभावः । ष्यञ् ॥

वाहुशर्द्धी । पुं० इन्द्रे ॥ वाहोः स्त्रीयोरेवशर्द्धोवलंयस्य ॥

वाहुसहस्रभृत् । पुं० कार्त्तवीर्य्यार्जुने ॥ वाहूनांसहस्रम्० विभर्त्ति ।

डुभृञ् । क्विप् । तुक् ॥

बाहूबाहवि । अ॰ बाहुयुद्धे ॥ बाहुभ्यांबाहुभ्यांप्रहृत्यं इदंयुद्धंप्रवृत्तम् । तत्रतेनेदमितिसरूपे॰इतिबहुव्रीहौ॰ इच्कर्मव्यतिहारइतीच् समासान्तः । अन्येषामपिदृश्यत इतिदीर्घः । ओर्गुणः । अव् । तिष्ठद्गुप्रभृतिषुपाठादव्ययीभावाद्व्ययत्वम् ॥

विदूरः । पुं॰ देशविशेषे ॥ यत्रबालवायजः संक्रियते ॥

विभित्सा । स्त्री॰ भेत्तुमिच्छायाम् ॥ भिदिर्॰ । सन्हलन्ताच्चेति किल्वाद्गुणाभावः । अप्रत्ययादित्यकारप्रत्यये॰ टाप् ॥

विभ्यत् । त्रि॰ वेपमाने ॥ बिभीतेः शतरि॰ नाभ्यस्ताच्छतुरितिनुमभावः ॥

विभ्राणः । त्रि॰ दधाने ॥ भृञः कर्त्तरिशानच् ॥

वीभत्सः । पुं॰ अर्जुने । पार्थे ॥ त्रि॰ क्रूरे ॥ घृणात्मनि ॥ विकृते ॥ रसविशेषे ॥ जुगुप्सास्थायिभावस्तुवीभत्सःकथ्यतेरसः । नीलवर्णोमहाकालदैवतोयमुदाहृतः ॥ वधेर्निन्दायांसन् । भावे॰घञ् ॥ यद्वा । अप्रत्ययात् । वीभत्साऽस्त्यस्य । अर्श आद्यच् ॥ यद्वा । वीभत्सते॰ वीभत्स्यतेवाऽनेनवा । वधबन्धने । स

न्नन्तः । मान्वधेत्यभ्यासदीर्घः । पचाद्यच्॰घञ्॰घोवा ॥

वीभत्सा । स्त्री॰ वीभत्से ॥

वीभत्सुः । पुं॰ अर्जुने । विजये ॥

वुक्कः । पुं॰ वुक्के ॥

वुक्कः । पुं॰ छागे ॥ न॰ अग्रमांसे । वुक्कायाम् ॥ वुक्यते । स्वादुत्वात् भृग्यते । वुक्कभषणे । घञ् ॥ हृदये ॥ पुं॰ स्त्री॰ समये॰ इतिरभसः ॥

वुक्कनम् । न॰ भषणे । श्वरवे ॥

वुक्का । स्त्री॰ वुक्के । हृदयान्तर्गतमांसविशेषे ॥ मेदः शोणितयोः सारादुक्कयोर्युगलंभवेत् । तौतुपुष्टिकरौप्रोक्तौजठरस्थस्यमेदसः ॥ हृदये ॥

वुक्कारः । पुं॰ सिंहनादे केशरिध्वनौ ॥

वुक्की । स्त्री॰ वुक्के ॥

वुडिलः । पुं॰ ऋषिविशेषे । आश्वतराश्वौ ॥

बुद्धः । पुं॰ लब्धवर्णे । विचक्षणे । विदुषि । पण्डिते ॥ परमार्थदर्शिनि । ब्रह्मविदि ॥ विष्णोरवतारविशेषे । सर्वज्ञे । सुगते । धर्म्मराजे । जिने । अजिनसुते । मुनीन्द्रे ॥ यथा । ततः कलौसंप्रवृत्ते सोहाक्षयसुरद्विषाम् । बुद्धोनाम्नाऽजिनसुतः कीकटेषुभविष्यति ॥

ईश्वरनिरूपणे बुद्धविशेषाणांमतमाह । सर्वज्ञइतिसौगताः । निरावरणइतिदिगम्बराः । लोकव्यवहारसिद्धइतिचार्वाकाः । शरीराण्येवचेतनानि०गौरोहंजानामीत्यादिज्ञानेन०गौरवत्वज्ञानवत्वयोः सामानाधिकरण्यानुभवादितिचार्वाकाणांमतञ्च । तेषांमतेजगतः क्षणभङ्गुरत्वम् । नन्वस्तुक्षणभङ्गः पूर्वपुञ्जाचोत्तरपुञ्जोत्पत्तिः तथाच पुञ्जनिष्ठकुर्वद्रूपाख्यजातिविशेषःस्मरणजनकतावच्छेदकइतिनदोषइति कुसुमाञ्जलिप्रथमस्तवकटीकायांरामभद्रः । बुद्धानांदशविधमतभेदमाह । वदन्तिपुत्रआत्मेति १ दृढप्राकृतबुधयः । देहआत्मेति २ चार्वाका०इन्द्रियाण्यपरे ३ चते ॥ तेऽन्ये प्राण ४ स्ततोन्ये तेमनआत्मेति ५ वादिनः । बुद्धिरात्मेति ६ बौद्धाः०शून्यमात्मेति ७ तेऽपरे ॥ यात्निकायज्ञपुरुषंसर्वज्ञं ८ सौगताविदुः । निरावरणमाहुर्यं दिगम्बरमतानुगाः ॥ चार्वाकाश्चापिलोकानांव्यवहारप्रसिद्धकम् १० । इत्यात्मप्रकाशः ॥ त्रि० बुधिते । ज्ञाते । विदिते । प्रशस्ताबुद्धिरस्य । अर्श आद्यच् । प्राशस्त्यञ्चसुगतिसाधकत्वात् । यद्वा । बुद्ध्यतेस्म । बुध अवगमने । क्तः । दिवादिरनिट् । प्रावृद्धे ॥

वृद्धद्रव्यम् । न० सौपिके । ओषा० इ०भा० ॥

वृद्धवान् । त्रि० ज्ञातवति । ज्ञानिनि ॥

वृद्धान्तः । पुं० जागरे ॥

वृद्धिः । स्त्री० आत्मगुणे । सर्वव्यवहारहेतुर्ज्ञानंबुद्धिः । साद्विधा । अनुभूतिः स्मृतिश्च । यथा । विभुर्बुद्ध्यादिगुणवान्बुद्धिस्तुद्विविधामता । अनुभूतिः स्मृतिश्चस्यादनुभूतिश्चतुर्विधा, प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे ॥ इतिनैयायिकमतेबुद्धेर्विभागईरितः ॥ अध्यवसायलक्षणायांमनीषायाम् । धिषणायाम् । धियि ॥ अध्यवसायोबुद्धिः क्रियाक्रियावतोरभेदविवक्षया । सर्वोव्यवहर्त्ता०आलोच्य०मत्वा०अहमत्राविकृतइत्यभिमत्य०कर्त्तव्यमेतन्मयेत्यध्यवस्यति० (‡) ततश्चप्रवर्ततइतिलोकसिद्धम् । तत्रकर्तव्यमितियोयंनिश्चयश्चितिसन्निधापन्नचैतन्यायाबुद्धेः सोध्यवसायोऽसाधारणव्यापारः तदभेदाबुद्धिः सचबुद्धेर्लक्षणम् । समानासमानजातीयव्यवच्छेदकत्वात् ॥ तत्त्वातत्त्वविवेकसामर्थ्ये । महत्तत्त्वे ॥ अन्तःकरणे ॥ निश्चयात्मिकायामन्तःकरणवृत्तौ ॥ बुद्धिरुपलब्धि

ज्ञानमित्यनर्थान्तरम्. नतुसाङ्ख्या
नामिव॰बुद्धितत्त्वस्य॰महत्तत्वापर
पर्य्यायस्यपरिणामविशेषोज्ञानम् ।
तथाच॰बुद्ध्यादिपदवाच्यत्वमनुभव
सिद्धज्ञानत्वजातिरेववा॰लक्षणम्
॥ ज्ञानस्यभार्य्यायाम् । पश्यमेधा
म् । मतौ । शेमुष्याम् ॥ अध्यात्म
बुद्धिरित्याहु:षडिन्द्रियविचारिणी
। अधिभूतञ्चमन्तव्यं ब्रह्मातत्राधि
दैवतम् ॥ इत्याश्वमेधिकापर्व । स-
त्त्वादिगुणभेदेनबुद्धेस्त्रैविध्यमीरित
म् । गीतायांवासुदेवेनअर्जुनायानु
पृच्छते । यथा । प्रवृत्तिंनिवृत्तिञ्च
कार्य्याकार्य्येभयाभये । बन्धं मोक्षञ्च
याबेत्तिबुद्धि : सापार्थसात्त्विकी ।
१ ॥ ययाधर्मं मधर्मञ्चकार्य्यञ्चाकार्य्य
मेवच । अयथावत्प्रजानातिबुद्धि:
सापार्थराजसी ॥ २ ॥ अधर्मं धर्म
मितियामन्यतेतमसावृता । सर्वा
र्थान्विपरीतांश्चबुद्धि:सापार्थताम
सीति ॥ ३ ॥ भारतेमोक्षधर्मेस्यागु
णा : पञ्चप्रकीर्त्तिता : । यथा । इ
ष्टानिष्टविपत्तिश्चव्यवसाय : समा
धिता । संशय: प्रतिपत्तिश्चबुद्धे:प
ञ्चगुणान्विदुरिति ॥ इष्टानिष्टानां
वृत्तिविशेषाणां॰विपत्तिर्नाश : ॰
निद्रारूपावृत्तिरित्यर्थ : । व्यवसाय:
उत्साह : । समाधिता॰ चित्तवृत्ति
निरोधइत्यर्थ : । संशय :॰ कोटि

द्वयस्पृक्ज्ञानम् । प्रतिपत्ति : प्रत्य
क्षादिप्रमाणवृत्ति : ॥ इतितट्टीका
॥ अन्या:सप्तगुणायथा । शुश्रूषाश्रव
णञ्चैवग्रहणंधारणन्तथा । ऊहापो
होर्थविज्ञानंतत्त्वज्ञानञ्चधीगुणा: ॥
इति ॥ अस्याबृत्तय:पञ्च । यथा । प्र
माणविपर्य्ययविकल्पनिद्रास्मृतयइ
ति ॥ बुद्ध्यतेऽनया । बुध॰ । क्तिन्॥
बुद्धितत्त्वम् न॰ बुद्धिस्वभावे ॥ तच्च
प्राकृतत्वादचेतनमिति॰तदीयोध्य
वसायोप्यचेतनोघटादिवत् । एवं
बुद्धितत्वस्य॰सुखादयोपिपरिणाम
भेदाअचेतना:॰ पुरुषस्तुसुखाद्यन
नुषङ्गीचेतन: । सोयंबुद्धितत्त्ववर्त्ति
नाज्ञानसुखादिनातत्प्रतिबिम्बित
स्तच्छायापत्त्या ज्ञानसुखादिमानिव
भवतीतिचेतनोनुगृह्यते॰ चिच्छा
यापत्त्याच॰अचेतनापिहिबुद्धिस्त
दध्यवसायश्चचेतनइवभवति । उक्त
ञ्च । तस्मात्तत्संयोगादचेतनं चे
तनावदिवलिङ्गम् । गुणकर्तृत्वेच
तथा कर्त्तेवभवत्युदासीन इति ॥
बुद्धिधर्म्म : । पुं॰ धर्मादिषु ॥ धर्मो
ज्ञानंविरागऐश्वर्य्यम्॰सात्विकमेत
द्रूपंतामसमस्माद्विपर्य्यस्तम् ॥
बुद्धिभेद : । पुं॰ बुद्धेर्विचालने ॥
बुद्धिरहमेतत्कर्म्म करिष्ये॰एतत्
फलञ्चभोक्ष्ये॰ इति॰तस्या:॰ भेदो
विचालनम्॰अकर्त्तात्मोपदेशेन ॥

बुद्धिभ्रंस : । पुं० मतेर्विषयेषुपतनकर्तरि ॥ रजोगुणे ॥

बुद्धिमान् । त्रि० बुद्धियुक्ते । ज्ञानवति ॥ तद्भुज्यतेयद्द्विजभुक्तशेषंसबुद्धिमान्योनकरोतिपापम् आत्मज्ञानवति । विवेकिनि ॥ प्रशस्तबुद्धौ ॥ बुद्धेःप्राशस्त्यंनाम । शुश्रूषाश्रवणंचैवग्रहणंधारणंतथा ।ऊहा पोहोर्थविज्ञानंतत्त्वज्ञानञ्चधीगुणाः॥ प्रशंसायांमतुप् ॥

बुद्धियुक्त : । त्रि० बुद्धिमति ॥ परमात्मसाक्षात्कारवति । समत्वबुद्ध्यायुक्ते ॥

बुद्धियोग : । पुं० आत्मबुद्धिसाधनभूतेनिष्कामकर्मयोगे । आत्मतत्त्वविषयेसम्यग्दर्शने ॥ अप्रचलितेनसम्यग्ज्ञानस्थैर्यलक्षणेनसमाधिनायुज्यतेइति ॥ बुद्ध्याव्यवसायात्मिकयाकृत : कर्मयोग : बुद्धियोग : ॥ बुद्धिसाधनभूतोवायोग : ॥

बुद्धिवित् । पुं० बौद्धे ॥ बुद्धिरेवात्मेतिबौद्धानांभ्रान्तिमात्रमेव । सुप्तेव्यभिचारात्०वेद्यस्यचघटवद्व्यतिरिक्तवेद्यत्वात् ॥

बुद्धिसम्पत्ति : । स्त्री० धीशक्तौ ॥ बुद्धे : सम्पत्ति : ॥

बुद्धिसहाय : । पुं० धीसचिवे मन्त्रिणि ॥ मते : साहाय्यकर्तरि ॥

बुद्धिस्कन्धमय : । पुं० संसारवृक्षे ॥ वृक्षस्यहिशाखा : स्कन्धादुद्भवन्ति संसारस्यच बुद्धे : सकाशान्नाना विधा: परिणामाभवन्ति०तेनसाधर्म्येण० बुद्धिरेवस्कन्धस्तन्मयस्तत्प्रचुरोयंसंसारवृक्ष : ॥

बुद्धीन्द्रियम् । न० ज्ञानेन्द्रिये : धीन्द्रिये ॥ तत्रेन्द्रियंतावत्त्रिविधंभवति । बुद्धीन्द्रियंकर्मेन्द्रियमन्तरिन्द्रियञ्च ।यथाहमनु: । बुद्धीन्द्रियाणिपञ्चैषांश्रोत्रादीन्यनुपूर्वश : । कर्मेन्द्रियाणिपञ्चैषांपायूपादीनिप्रचक्षते ।। एकादशंमनोज्ञेयंस्वगुणेनोभयात्मकम् । यस्मिन्जितेजितावेतौभवत : पञ्चकौगणाविति ॥ बुद्धे : करणत्वाद्बुद्धीन्द्रियम् । सङ्कल्परूपेणोभयरूपेन्द्रियगणप्रवर्तकस्वरूपम् । मनस्त्वन्तरिन्द्रियंज्ञातव्यं। बुद्ध्यर्थमिन्द्रियं ॥

बुद्ध्यमान : । त्रि० गम्यमाने ॥

बुद्बुद : । पुं० जलस्फोटे । वर्तुलाकारेजलविकारे । बुल्बुला० इ० भा० ॥ अभ्रच्छायातृणादग्निनीचसेवापथेजलम् । वेश्यारागः खलेप्रीति: षडेतेबुद्बुदोपमा: ॥ गर्भस्थावयवविशेषे यथा । पञ्चरात्रेणकललंबुद्बुदाकारतांव्रजेत् ॥

बुद्बुदाक्षि : । त्रि० पुष्पिताक्षे ॥

बुध : । पुं० विदुषि । विपश्चिति । दोषज्ञे । सति । पण्डिते ॥ विवे-

शब्द : स्वरतइतिभाष्यपाठ : । दुष्टान्शब्दान् माप्रयुक्ष्महीत्यर्थंव्याकरणमिति ॥ अत्रकैयट : । स्वरेणास्त : । आद्यादित्वात्तसि : । मिथ्याप्रयुक्तइति । यदर्थं प्रतिपादना-यप्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात् प्रतिपादयन्नाभिमतमर्थंमाहेत्यर्थ : । वागेववज्रोहिंसकत्वात्यथेन्द्रशत्रु शब्द : स्वरदोषात्यजमानंहिंसितवानित्यर्थ : । इन्द्रस्याभिचारोवृत्रेणारब्ध : । तत्रेन्द्रशत्रुर्वर्द्धस्वेतिमन्त्रऊहित : । तत्रेन्द्रस्यशमयिताशातयिताभवेतिक्रियाशब्दोऽत्रशत्रुशब्दआश्रितोनतुरूढिशब्द: । सदाश्रयणंहिबहुव्रीहितत्पुरुषयोरर्थाभेद : । तत्रेन्द्रादिभिचर्त्वेसिद्धे सतिइन्द्रस्यशत्रुर्भवेत्यर्थेप्रतिपाद्येअन्तोदात्ते प्रयोक्तव्येआद्युदात्तत्वेजाप्रयुक्तइत्यर्थान्तराभिधानादिन्द्रएव०वृत्रस्यशातयितासम्पन्न : । इन्द्रशत्रुत्वस्यविधेयत्वात्सम्बोधनविभक्तेरनुवाद्यविषयत्वादिहाभाव : । यथाराजाभवयुध्यस्वेति । ऊह्यमानस्यचामन्त्रत्वात्यज्ञकर्मणीतिजपादिपर्युदासिमन्त्राणामेकश्रुतिर्विधीयमानानेहभवतीति ॥ * ॥ मन्त्रान्ते कर्म सन्निपातइतिन्याय : ॥ प्रयोगसमवेतार्थस्मारकेवेदभागे ॥ मन्त्राणांतादृशार्थस्मारकत्वेनैवार्थवत्त्वम् ० नतुतदुच्चारणमदृष्टार्थं सम्भवति । दृष्टफलकत्वे ० अदृष्टकल्पनायाअन्याय्यत्वात् । नचदृष्टार्थस्मरणस्यप्रकारान्तरेणापि सम्भवान्मन्त्राम्नानं व्यर्थमितिवाच्यम् । मन्त्रैरेवस्मर्त्तव्यमितिनियमविध्याश्रयणात् ॥ देवादीनांसाधने । मायावीजादौ ॥ गुह्यवादे । रहसिकर्त्तव्याऽवधारणे । मनत्रणायाम् ॥ तस्यच०पञ्चाङ्गानिभवन्ति । तानिच । कर्मणामारम्भोपाय : ० पुरुषद्रव्यसम्पत् ० देशकालविभाग : ० विनिपातप्रकार : ० कार्यसिद्धिरिति ॥ मन्त्रमूलंयतोराज्यमतोमन्त्रंसुरक्षित । कुर्याद्यथातन्नविदु : कर्मणामाफलोदयम् ॥ गिरिपृष्ठंसमारुह्यप्रासादंवारहोगत : । अरण्येनि : शलाकेवामंत्रयेदविभावित : ॥ षट्कर्णोभिद्यतेमन्त्रश्चतुष्कर्णस्थार्यते । द्विकर्णस्यतुमन्त्रस्यब्रह्माप्यन्तेनबुध्यते ॥ मन्त्रते ० मन्त्रणं वा । मन्त्रिगुप्तभाषणे । घञ् ॥ पञ्चमराशौ ।

मन्त्रकृत् । पुं० मन्त्रिणि । मन्त्रणाकारके ॥ मन्त्रान्कृतवान् । सुकर्मपापमन्त्रपुण्येषुकृञइतिक्विप् ॥ मन्त्रस्रष्टरि ॥ दौत्यकृति ॥ मन्त्राणांद्रष्टरि ० प्रयोक्तरि-

च ॥

मन्त्रगण्डकः । पुं० विद्यायाम् ॥

मन्त्रगूढः । पुं० चरे ॥ मन्त्रोगूढोयस्मिन् ॥

मन्त्रगृहम् । न० मन्त्रणागारे ॥

मन्त्रजा । स्त्री० मन्त्रशक्तौ ॥

मन्त्रजिह्वः । पुं० वह्नौ ॥

मन्त्रज्ञः । पुं० चरे ॥ त्रि० । मन्त्रविदि ॥

मन्त्रज्वालः । पुं० अग्नौ ॥

मन्त्रणम् । न० मन्त्रे ॥ मन्त्रि० । भावेल्युट् ॥ मन्त्रणायाम् ॥

मन्त्रणा । स्त्री० मन्त्रे ॥ रहसिकर्त्तव्यावधारणे ॥ तत्रवर्णनीयानि यथा । मन्त्रेपञ्चाङ्गताशक्तिषाड्गुण्योपायसिद्धयः । उदयाश्चिन्तनीयाश्चस्थैर्यौन्नत्यादिसूक्तयः ॥

मन्त्रणागारम् । न० मन्त्रगृहे ॥

मन्त्रदः । त्रि० मन्त्रदातरि ॥

मन्त्रदाता । त्रि० मन्त्रप्रदानकर्त्तरि । श्रीगुरौ ॥ अदीक्षितस्यमूर्खस्यनिष्कृतिर्नास्तिनिश्चितम् । सर्वकर्मस्वनर्हस्सनरकेतस्यशौः स्थितिः ॥ जन्मदातान्नदातावामातान्येगुरवस्तथा । पारंकर्त्तुंनशक्यन्तेघोरेसंसारसागरे ॥ विद्यामन्त्रज्ञानदातानिपुणः पारकर्म्मणि । नशक्तः शिष्यमुद्धर्त्तुमीश्वरश्वरोऽपरः ॥

मन्त्रदीधितिः । पुं० अग्नौ ॥

मन्त्रनिर्णयः । पुं० मन्त्रनिश्चये ॥ यथा । मन्त्रमूलंयतोराज्यंततोमन्त्रंसुरक्षितम् । कुर्याद्यथातन्नभिद्ःकर्मणामाफलोदयात् ॥ अर्थानर्थौह्रियन्तेभौसंशयश्चपरीक्ष्यते । समंत्रइतिविज्ञेयः शेषा अखलुविभ्रमाः ॥ एकमेवविषंहन्तिशस्त्रेणैकश्चवध्यते । सराष्ट्रसम्पदंहन्तिराजानंमंत्रविप्लवः ॥ करिष्यन्नप्रभाषेतकृतान्येवतुदर्शयेत् । धर्मार्थकामकार्याणि कृतोमंत्रोनभिद्यते ॥ गिरिपृष्ठमुपारुह्यप्रासादंवारहोगतः ॥ खप्रथेनिः शलाकेवातत्रमंत्रोविधीयते ॥ तत्रसामप्रयोक्तव्यं कार्येषुगुणवत्स्वपि । दानंलुब्धेपिभेदश्चशङ्कितेष्वपिनिश्चयः ॥ जडमूकांधवधिरांस्तिर्यग्योनीन्वयोधिकान् । स्त्रीम्लेच्छव्याधितव्यङ्गान्मंत्रकालेनिषेधयेत् ॥ इतिसत्यकृतः प्रोक्ताराजनीतिरियंमया । यत्त्रिवर्गाविरुद्धंस्याद्राजनीतिस्तदुच्यते ॥ इति युक्तिकल्पतरौनीतियुक्तिः ॥

मंत्रपूतः । त्रि० मंत्रेणपवित्रीकृते ॥

मंत्रपूतात्मा । पुं० गरुडे ॥ त्रि० मंत्रेणपवित्रात्मनि ॥

मंत्रवित् । पुं० चरे ॥ मंत्र-

मंत्री

वेत्ति । विद० । क्विप् ॥
वि० मंत्रज्ञातरि ॥
मंत्रवेश्म । न० मंत्रगृहे । चिन्तो द्दवसिते ॥
मंत्रशक्तिः । स्त्री० राज्ञ्शक्ति विशेषे । ज्ञानबले ॥ सन्ध्या दिषसांयथावत्स्थापनं ज्ञानबलंमं त्रशक्तिः । पञ्चाङ्गमंत्रोमंत्रश क्तिरित्यन्ये ॥
मंत्रस्पृक् । वि० मंत्रकरणकस्प र्शकर्त्तरि ॥
मंत्रितः । त्रि० मंत्रेणसंस्कृते । अभिमंत्रिते ॥
मन्त्री । त्रि० उपदेष्टरि । साधके ॥ पुं० मन्त्रजातकर्त्तव्यनिश्चयकर्त्त- रि । धीसचिवे । अमात्ये ॥ कार्य सहाया : सचिवाबुद्धिसहायाश्चम- न्त्रिणः प्रोक्ताइतिभेदः । तल्लक्ष णंयथा । मन्त्रीभक्तः शुचिः शू रोऽनुरक्तोबुद्धिमान्क्षमी । आन्वी क्षिक्यादिकुशलः परिच्छेदीसुदेश जः ॥ विद्यादिगुणसम्पन्ना विप्राः कार्याहिमन्त्रिणः । यथोक्तं कालिकापु राणे । मन्त्रिणस्तुनृपः कुर्य्याद्विप्रान् विद्याविशारदान् । विशुद्धांश्चकुलीनां श्चधर्मार्थकुशलानृजून् ॥ मन्त्रयेत्तैः समंकालेनात्यर्थंबहुभिश्चरेत् एकैकै नैवकर्त्तव्यंमन्त्रस्तुविनिश्चयम् ॥ व्य स्तैश्चैवसमस्तैश्चवान्यस्यव्यपदेशतः

मंथः

। स्वयंवृत्तंमन्त्रगृहंस्यात्तत्रारुह्यम न्त्रयेत् ॥ अरण्येनिःशलाकेवान- यामिन्यांकदाचन । शिशून्शाखामृ गान्षण्डान्शुकान्वैसारिकांस्तथा ॥ वर्जयेत्मन्त्रगेहेषुमनुष्यानुद्धतां- स्तथा । दूषणंमन्त्रभेदेषुनृपाणांयच्च जायते ॥ नतत्सम्यक्समाधातुंद- क्षैर्नृपशतैरपोति ॥ अपिचमत्स्यपुरा णे । बहुभिर्मंत्रयेत्कामंराजामंत्रं- पृथक्पृथक् । मंत्रिणामपिनोकुर्यात् मंत्रीमंत्रप्रकाशनम् ॥ नक्वचित्कस्य विश्वासोभवतीहसदानृणाम् । नि श्चयश्चसदामंत्रे कार्यएकेनसूरिणा ॥ भवेद्वानिश्चयावाप्तिः परबुद्ध्युपु- जीवनात् । एकस्यैवमहीभर्त्तुर्भूं यः कार्योविनिश्चयः ॥ इति ॥ मं त्रोगुप्तभाषणमस्यास्ति । अतइनिः ॥ यद्वा । अवश्यंमंत्रयते । मन्त्रिगु- प्तभाषणे । आवश्यकेणिनिः ॥ य स्यादित्वान्यन्त्रोवा ॥
मन्थः । पुं० मन्थानदण्डे ॥ दिवाक रे ॥ सक्तवे । द्रवद्रव्यसंयुक्तेषुसक्तु षु । यथा । सक्तुभिः सर्पिषाभ्यक्तैः शीतवारिपरिप्लुतैः । नात्यच्छोनाति सान्द्रश्चमन्थइत्यभिधीयते ॥ पेय- विशेषेयथा । जलेचतुष्पलेशीतेक्षुसं- द्रव्यंपलंक्षिपेत् । मृत्पात्रेमन्थयेत् सम्यक्तस्माच्चद्विपलंपिबेत् ॥ क्षुसं चूर्णीकृतंमन्थयेत् ० मृदनीयात् ।

नेत्ररोगे ॥ नेत्रमले ॥ मारणे ॥ म थ्यतेऽनेन । मथिहिंसासंक्लेशनयो: । हलश्चेतिघञ् ॥ मन्थने ॥
मन्थजम् । न० नवनीते ॥
मन्थदण्ड : । पुं० मन्थाने । मन्थान-दण्डे । रई० इ० भा० ॥
मन्थनम् । न० विलोडने । कुन्थने ॥ पुं० मन्थानदण्डे ॥
मन्थनघटी । स्त्री० दधिमन्थनपात्रे ॥
मन्थनी । स्त्री० गर्गर्याम् । मन्थनपात्रे ॥ मथ्यतेऽस्याम् । मन्थविलोडने । करणेतिल्युट् ॥
मन्थर : । पुं० कोषे ॥ फले ॥ बाधे । मन्थाने ॥ सूचके । मन्दगामिनि । योद्धरि ॥ कोपे ॥ केशे ॥ न० कुसुम्भम् ॥ त्रि० मन्दे ॥ पृथौ ॥ वक्रे ॥ मन्दगामिनि । जडे ॥ सूचके ॥ नीचे ॥ मन्थतिपादौ । मथि० । वाहुलकादरन् ॥
मन्थरा । स्त्री० कैकेय्यादास्याम् ॥
मन्थरु : । पुं० कुठेरौ । चामरवाते ॥
मन्थशैल : । पुं० मन्दराचले ॥
मन्था । स्त्री० मेथिकायाम् ॥
मन्थान : । पुं० मन्थदण्डे । वैशाखे रई० इ० भा० ॥ आरग्वधे ॥ न० गायत्रीच्छन्द: ६ प्रभेदे ॥ यथा । कर्णध्वजानन्दमाधायनित्यस्व । व-र्णैरसैर्यस्तु मन्थानमेतत्तु ॥ यथा । शीतांशुवक्त्रायपाथोजनेत्राय । मन्दस्वनन्दत्स्वभव्यायपुंत्राय ॥ मन्थति । मथि० । वाहुलकादानच् ॥
मन्थानक : । पुं० तृणभेदे । रहिते । हढमूले । तृणाङ्घ्रिपे ॥
मन्थिनी । स्त्री० दधिमन्थनपात्रे । गर्गर्याम् । कलस्याम् । मधानी० इ० भा० ॥
मन्द : । पुं० शनैश्चरे ॥ हस्तिजात्यन्तरे ॥ शीघ्रपादे । यमे ॥ प्रलये ॥ त्रि० अतीक्ष्णे । अलसे । शीतके ॥ मूर्खे ॥ स्वैरे ॥ अभाग्ये । भाग्यरहिते ॥ रोगिणि ॥ अल्पे ॥ मदरते ॥ खले ॥ अशुद्धचित्तत्वेनज्ञानाधिकारमप्राप्ते ॥ मन्दते । मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु । पचाद्यच् ॥ न० ईषदर्थे ॥
मन्दग : । त्रि० मृदुगामिनि । अशीघ्रगे ॥
मन्दगति : । पुं० शनौ ॥ त्रि० मन्दगामिनि ॥
मन्दगामी । त्रि० मन्दगमनशीले । मन्थरे ॥ मन्दं गच्छति० तच्छील: । गमॢ० । सुप्यजातावितिणिनि:
मन्दजननी । स्त्री० सूर्यपत्न्याम् । शनिमातरि । छायायाम् । तपस्याम् ॥
मन्दट : । पुं० पारिभद्रवृक्षे ॥
मन्दता । स्त्री० आलस्ये । मन्दत्वे ॥
मन्दनम् । न० स्तोत्रे ॥ मन्दते । मदि । कॄपॄवृजिमन्दीत्यादिनाक्यु: ॥

मन्दप्रज्ञ : । त्रि० जडबुद्धौ ॥ मन्दाज्ञाप्रज्ञाधीर्यस्य स : ॥

मंदभाग्य : । त्रि० विघ्नाकुले ॥

मंदभू : । पुं० मन्दभूमौ ॥

मन्दर : । पुं० मन्थशैले ॥ मन्दारमन्दपे । स्वर्गे ॥ हारभेदे ॥ मेरोर्दाक्ष्यांथेप्राच्यांदिशिपूर्व तवर्षे पञ्चाशत् सहस्रोच्छ्रायेविष्कम्भशैले ॥ तत्र योजनसहस्रो न्नतिमान्कदम्बपादपोऽस्ति । सुराङ्गनाक्रीडाप्रधानोहि मन्दर : । न० वर्णवृत्तान्तरे ॥ छन्दसिभोयदि । मन्दरमुच्यति ॥ शङ्करशङ्कर । वैरिभयङ्कर ॥ त्रि० बहुले ॥ मन्दे ॥

मन्दिरहरिण : । पुं० जम्बुद्वीपोपद्वीपविशेषे ॥

मन्दसान : । पुं० अग्नौ ॥ जीवे ॥ निद्रायाम् ॥ मन्दते । मदि० । उन्ञ्चिदुधिमन्दिसहिभ्य : किदित्यसानच् ॥ वेदभाष्येयौगिकार्थएवपुरस्कृत : ॥

मन्दा । स्त्री० सङ्क्रान्तिविशेषे ॥ अजादित्वाट्टाप् ॥

मन्दाकम् । न० स्तवने ॥

मन्दाकिनी । स्त्री० वियद्गङ्गायाम् । स्वर्गेयाम् । सुरदीर्घिकायाम् ॥ प्रधानधारायास्वर्गेसाचमन्दाकिनी स्मृता । योजनायुतविस्तीर्णाप्रस्थे नयोजनास्मृता ॥ क्षीरतुल्यजलाया स्वरत्युत्तुङ्गतरङ्गिणी । वैकुण्ठाद् ब्रह्मलोकस्ततः स्वर्गं समागता ॥ सङ्क्रान्तिविशेषे ॥ यथा । बुधेमैत्रसंज्ञे तुमन्दाकिनीसानृपाणान्तुसौख्यंभवेत्तचमासि ॥ जगतीच्छन्द: १२ प्रभेदे ॥ ननररघटितातुमंदाकिनी । यथा । बलिदमनविधौबभौसङ्गता० पदजलरुहियस्यमंदाकिनी सुरनिहितसिताम्बुजस्रङ्निभाहरतुजगदघं सपीताम्बर : ॥ मंदमकति० तच्छीला । अककुटिलायांगतौ । सुपोतिणिनि : । ङीप् ॥

मंदाक्रान्ता । स्त्री० अत्यष्टिच्छंद : १७ प्रभेदे॥ मंदाक्रान्ताम्बुधिरसनगैर्मोभनौतौगयुग्मम् । यथा । प्रेमालापै : प्रियवितरणै : प्रीणितालिङ्गनाद्यै र्मंदाक्रान्तातदनुनियतंवश्यता मेतिबाला । एवंशिक्षावचनसुधया- राधिकाया : सखीनांप्रीत: पायात् स्मितसुवदनोदेवकीनंदनोन : ॥

मंदाक्षम् । न० लज्जायाम् ॥ मंदमक्षं वागाद्यत्र ॥

मंदाग्नि : । पुं० अर्कनिष्कासनाथाग्निविशेषे ॥ कफद्वाराल्पजठरानले ॥ तस्यनिदानादियथा । मंदस्तीक्ष्णोथ विषम : समश्चे तिचतुर्विध : । कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनल : ॥ विषमोवातजान्रोगांस्तीक्ष्ण : पित्तसमुन्नतान् । करो

स्यग्निस्तथामंदीविकारान्कफसम्भ-
वाम् ॥ समासमाग्ने रशितामात्रा
सम्यग्विपच्यते। अल्पापिनैवमंदाग्ने
र्विषमाग्ने स्तुदेहिन : ॥ कदाचित्प
च्यतेसम्यक् कदाचिन्नपच्यते ॥
इति ॥ तस्यौषधंयथा। चित्रकस्या
ष्टभागानिशूरणस्यचषोडश। शुण्
ठ्याश्चत्वारिभागानिमरिचानांद्वयं-
तथा ॥ पिप्पलीपिप्पलीमूलंविडङ्
गानांचतुष्टयम्। अष्टौमूषलिभागा
श्चत्रिफलायाश्चतुष्टयम् ॥ द्विगुणे-
नगुडेनैषांमोदकानिहिकारयेत्।
तद्भक्षणमजीर्णंहिपाण्डुरोगञ्चका-
मलाम् ॥ अतिशोणितमन्दाग्निप्ली
हाद्यञ्चनिवारयेत् ॥ इ० ॥
मन्दायु : । त्रि० अल्पायुषि ॥
मन्दार : । पुं० सुरद्रुमविशेषे। पारि
भद्रे। निम्बतरौ। बकायन० इ०
भा० ॥ अर्कपर्णे। आक० इ० भा०
॥ मन्दते० मोदयति। मदिस्तुत्या
दौ। अञ्जिमदिमन्दिभ्यआरन् ॥ म
न्दाश्रयस्य ॥ यद्वा ॥ मन्दाआराधा
रा अस्यसरलत्वात् ॥ मन्दमृच्छतिवा
ऋगतौ ॥ कर्मण्यण् ॥ मन्दानिय
र्त्ति। अण्। मन्दैरर्यतेवा। घञ् ॥
तीर्थविशेषे ॥
मन्दारु : । पुं० पारिजाते ॥ मन्दते।
मदि० । बाहुलकादारु : ॥
मन्दिकुकुर : । पुं० मत्स्यविशेषे ॥

मन्दिर : । पुं० मकरावासे। समुद्रे ॥
जानुपश्चाद्भागे ॥ न० नगरे ॥ अगा
रे। निशान्ते। वस्त्ये। सदने ॥
देवतागृहे ॥ मन्दते० मन्द्यते० सु
प्यतेऽत्रवा। मदि० । इषिमदिमु-
दौतिकिरच् ॥
मन्दिरपशु : । पुं० विडाले ॥
मन्दिरा। स्त्री० मन्दिरे ॥ अजादि-
त्वाट्टाप् ॥
मन्दुरा। स्त्री० वाजिशालायाम् ॥ श
यनीयार्थवस्तुनि। मादरी० इ०
भा० ॥ मन्दतेऽत्र। मदिस्तुत्यादौ।
मन्दिवाशीत्युरच् ॥
मंदेह : । पुं० राक्षसविशेषाणांसंज्ञा
याम् ॥ यथा। सन्ध्याकालेतुस-
म्प्राप्तेरौद्रे परमदारुणे। मंदेहारा
क्षसाघोरा : सूर्यमिच्छन्तिखादितु
म् ॥ प्रजापतिकृत : शापस्तेषांमै
त्रेयरक्षसाम् ॥ अक्षयत्वंशरीराणां
मरणञ्चदिनेदिने ॥ तत : सूर्यस्य-
तैर्युद्धं भवत्यत्यन्तदारुणम्। ततो
द्विजोत्तमास्तोयं प्रक्षिपन्तिमहामु-
ने ॥ ओङ्कारब्रह्मसंयुक्तं गायत्र्या-
भिमन्त्रितम्। तेनदह्यन्तितेपा
पावज्रीभूतेनवारिणा ॥ इत्यादि-
विष्णुपुराणे द्रष्टव्यम् ॥
मंदोदरी। स्त्री० रावणस्यपत्न्या-
म्। मयासुरस्यपुत्र्याम् ॥
मंदोदरीश : । पुं० रावणे ॥ मंदो

दर्याः ईश:॥

मन्दोदरीसुतः। पुं० इन्द्रजिति।

मन्दोष्णम्। न० ईषदुष्णे॥ मन्दञ्च तदुष्णञ्च॥ त्रि० तद्वति॥

मन्द्रः। पुं० गम्भीरध्वनौ॥ मेघादिशब्दे॥ मन्दते। मदि०। स्फायितञ्चीतिरक्। वाद्यविशेषे। मृदङ्गे॥ त्रि०गम्भीरध्वनिवति॥

मन्मथः। पुं० कामदेवे। कुसुमायुधे॥ कपित्थे॥ मननंमत्०चेतना। मन०। सम्पदादित्वात्क्विप्। गमादीनांक्वाविति नलोपः। ह्रस्वस्येतितुक्। मथतीतिमथः। मथि०। अच्। मतोज्ञानस्यमथः मन्मथः॥ मनोमथ्नातिवा। पृषोदरादिः। मिथुनलग्ने॥ वत्सरविशेषे। २९॥ सरोगचतथादेविदाहज्वरसमन्वितम्। अभिभूतंजगत्सर्वंमन्मथेसुरपूजिते॥

मन्मथानन्दः। पुं० महाराजचूते॥

मन्मथालयः। पुं० आम्रे॥

मन्मनः। पुं० गद्गदध्वनौ॥ न०दम्पत्योः शनैर्भाषणे।। सुरतेकर्णमूलेषुयच्चदेशीयभाषया। दम्पत्योर्जल्पितंमन्द्रंमन्मनंतंविदुर्बुधाः॥

मन्मनस्कः। त्रि० मन्मनसि॥ मय्येवमनः सङ्कल्पात्मकंयस्य॥

मन्मयः। त्रि० मदेकचित्ते॥ मांपरमात्मानंतत्पदार्थंत्वंपदार्थाभेदे-

नसाक्षात्करणशीले॥

मन्या। स्त्री० ग्रीवायाः पश्चाद्भागे०-स्थितायांशिरायाम्॥ गलपार्श्वशिरायाम्॥ मन्यतेऽनया। सञ्ज्ञायांसमजेतिक्यप्॥

मन्याका। स्त्री० मन्यायाम्॥

मन्युः। पुं० क्रुधि॥ दैन्ये॥ शोके॥ यज्ञे॥ मन्यते। मनज्ञाने। यजिमनिशुन्धिदसिजनिभ्योयुच्॥ सृगव्वादिर्वा॥

मन्ये। अ० वितर्के॥

मन्वन्तरम्। न० दिव्यानांयुगानामेकसप्ततौ। किञ्चिदधिकैकसप्ततियुगात्मकेमनोः कालविशेषे॥ एवंचतुर्युगाख्यानांसाधिकाह्येकसप्ततिः। कृतत्रेतादियुक्तानांमनोरन्तरमुच्यते॥ मनवः स्वायम्भुवादयस्तेषामन्तरमवकाशः स्थितिरितियावत्॥ एकसप्ततिरित्यमरोक्तिः। अत्रयद्यपिगणनया०अष्टयुगैनाधिकासङ्ख्यासम्पद्यते०। यतः० दैविकानांयुगानान्तुसहस्रंब्रह्मणोदिनम्। मन्वन्तरंतथैवैकंतस्यभागाश्चतुर्दश॥ ततकिञ्चिदधिकादिव्ययुगानामेकसप्ततिरिति०नामविधानेसर्वज्ञनारायणेनोक्तत्वात्। तथापि०अल्पत्वादिहतथानोक्तमितिबोध्यम्। मन्वन्तरस्यसङ्ख्यातवर्षाणियथा। त्रिंश-

शेषे ॥ संज्ञायांकन् ॥
मर्कटतिन्दुकः । पुं० कुपीलौ ।
मर्कटपिप्पली । स्त्री० अपामार्गे ॥
मर्कटप्रियः । पुं० क्षीरवृक्षे ॥
मर्कटवासः । पुं० आशावन्धे ॥ लूतातन्तौ । मकडीकाजाल० इ० भा० ॥
मर्कटशीर्षम् । न० हिङ्गुले ॥
मर्कटास्यम् । न० तार्म्ने ॥ वानरमुखे ॥ पुं० म्लेच्छविशेषे ॥ त्रि० वानरमुखसदृशमुखविशिष्टे ॥
मर्कटी । स्त्री० करञ्जप्रभेदे । मकडाकरैंजुवा० इ० भा० ॥ शूकशिम्ब्याम् ॥ मर्कटीर्वाववविधचेष्टाहेतुत्वात् ॥ अजमोदायाम् ॥ अपामार्गे ॥ वानर्याम् ॥ गौरादित्वान्ङीष् ॥
मर्कटेन्दुः । पुं० काकतिन्दुके ॥
मर्करः । पुं० भृङ्गराजे ॥
मर्करा । स्त्री० निष्फलायाम् ॥ दर्व्याम् ॥ सुरङ्गायाम् ॥ भाण्डे ॥
मर्जूः । पुं० धावके । रजके ॥ पीठमर्दे । स्त्री० शुद्धौ । मार्ष्टि । मृजूशुद्धौ । मृजेर्गुणश्चेत्यूः ॥ मार्जनंवा ॥
मर्त्तः । पुं० मर्त्यलोके ॥ मानुषे ॥ म्रियन्तेऽत्र । मृङ्० । हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्निति तन् ॥
मर्त्यः । पुं० मनुष्ये ॥ म्रियते । मृङ्० । हसिमृग्रिणितितन् । ततः स्वार्थेयत् । प्राक्प्रवोधात्० सर्वेहिमर्त्यः ॥ मध्यलोके ॥ म्रियन्तेऽत्रेतिमर्त्यः । हसिमृग्रिणि० मृङ्धातोस्तन्० मर्त्तः । ततोनवसूरमर्त्तयविष्ठेभ्यः स्वार्थेयत् ॥ मर्त्तेभवोवा । दिगादेराकृतिगणत्वाद्यत् ॥
मर्त्यमुखः । पुं० यक्षे ॥
मर्त्या । स्त्री० मानुषस्त्रियाम् ॥
मर्त्येन्द्रा । स्त्री० मातरि ॥ अग्निदमन्याम् ॥ राजमातरि ॥
मर्द्दनम् । न० अङ्गस्यमर्द्दने । पादमर्द्दनादौ । संवाहने ॥ मृदक्षोदे । ल्युट् । कदने ॥ चूर्णने० । त्रि० मर्दयितरि ॥ मर्दयति । मृदक्षोदे० मृदमर्द्दनेवा । हेतुमण्णिजन्तात्कर्त्तरिल्युट् । बहुलमन्यत्रापीतियुज्वा ॥
मर्द्दलः । पुं० वाद्यप्रभेदे ॥ मर्दलीमादल इति० नेपालख्यातो० मृदङ्गसजातीयः ॥ मर्दमुपमर्दंलाति० । ला० । आतङ्गतिकः ॥
मर्द्दितः । त्रि० चूर्णिते ॥ ग्रन्थिते ॥
मर्द्दिता । त्रि० मर्द्दिनि ॥
मर्द्दी । त्रि० मर्द्दितरि ॥
मर्म्मकील । पुं० भर्त्तरि ॥
मर्म्मज्ञः । त्रि० मर्मविदि । तत्त्वज्ञे ॥
मर्म्म । न० स्वरूपे । तत्त्वे ॥ यथा ।

मृगयानविगीयतेन्द्रैरपिधर्म्मोपम-
मर्म्मपारगैः। अरकुन्दरमांयस्त्यजन्तवधर्मः सदयोदयोज्ज्वलाः॥
सन्धिस्थाने॥ जीवस्थाने॥ यरच्चे-
नेगांवरर्ममनिभाचन्दीतकश्चित्।
नसंवसेत्सूतकेचनकंवैनमर्माणिस्पृशेत्॥ अरुषि॥

मर्म्मरः। पुं० वस्त्रविशेषे॥ शुष्कपर्णध्वनौ॥ वस्त्रपर्णानांस्वनिते। मर्मर्मरड्मरड्० इतिचभाषा॥ मर्मरातिं। रा० कः॥ अनुकरणशब्दोवा॥

मर्म्मरी। स्त्री० पीतदारुणि॥

मर्म्मरीकः। त्रि० दीनजने॥ म्रियते। मृङ्०। पर्फरीकादित्वादीकन्०धातोर्द्वित्वंरुक्चाभ्यासस्य॥

मर्म्मवित्। पुं० मर्म्मज्ञे। कार्पटिके॥

मर्म्मवेदी। पुं० मर्मविदि॥

मर्म्मस्पृक्। त्रि० मर्मपीडके। अरुन्तुदे॥ मर्म्मस्पृशति। स्पृशउपतापे। स्पृशोऽनुदकइति० क्विन्॥

मर्म्माविन्०द्। त्रि० सन्धिस्थानवेधकर्त्तरि॥ मर्म्मज्ञे॥ मर्म्माणिविध्यति। व्यधताडने। क्विप्। ग्रहिज्येतिसम्प्रसारणम्। नहिवृतीतिदीर्घः॥

मर्म्मिकः। त्रि० मर्मज्ञे॥

मर्म्मुरः। पुं० तुषानले॥

मर्य्यः। पुं० मरणधर्म्मणि। मनुजे॥

मर्य्या। स्त्री० सीमायाम्॥

मर्य्यादा। स्त्री० सीमनि। अवधौ। तेनविनेत्यर्थे॥ स्थितौ। धारणायाम्। सत्पथस्थितौ॥ अनुल्लङ्घनीयायांव्यवस्थायाम्॥ स्थित्यनतिक्रमे॥ कुलभूमौ॥ मर्येतिसीमार्थेऽव्ययम्। तत्रदीयते। डुदाञ्०। आतश्चोपसर्गइत्यङ्॥

मर्षः। पुं० क्षान्तौ॥ मर्षणम्। मृषतितिक्षायाम्॥ घञ्॥

मर्षणम्। न० अपराधेसत्यपिकोपानाविष्करणे। क्षमायाम्। मृष० भावेल्युट्॥

मर्षितः। त्रि० क्षान्तियुक्ते॥ मृषेः कर्त्तरिक्तः। भावेक्तेक्लीवम्॥

मर्षितवान्। त्रि० क्षान्ते॥ मृषेः कर्त्तरिक्तवतुः॥

मर्षी। त्रि० क्षमाशीले॥

मलः। पुं० न० पापे। किल्बिषे॥ विशि। विष्ठायाम्। यथा। मलायत्तंवलंपुंसांशुक्रायत्तन्तुजीवनम्। तस्माद्यत्नेनतंरक्षेत्यक्ष्मिणोमलरेतसीइति॥ किट्टे। मण्डूरादौ॥ खेदादौ॥ वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविण्नखाः। श्लेष्माश्रुदूषिकास्वेदोद्वादशैतेनृणांमलाः॥ वातादिषु॥ यथा। शरीरदूषणाद्दो

धातूनांमलिनीकरणान्मला : । धात्वा हारवर्त्तेः स्यु वातपित्तकफास्त्रय: ॥ सर्वेषामेवरोगाणांनिदानंकुपिता-मला : । तत्प्रकोपस्यतुप्रोक्तं विविधाहितसेवनम् । हरेद्वसन्तेश्लेष्माणं पित्तं शरदिनिर्हरेत् वर्षासुशमये द्वायुंप्राग्विकारसमुच्छ्रयात् ॥ अन्तर्विशेषमाहमाधव : कफपित्तानिला : पूर्वमध्यान्तेषुव्यवस्थिता : । देहाहोरात्रिवयसांसन्धिष्वपिकफानिलादिति ॥ अस्यार्थ : । कफपित्तानिला : देहाहोरात्रिवयसांपूर्वमध्यान्तेषुयथासंख्यंव्यवस्थिता : । देहस्यपूर्वभाग:शरआरभ्यवक्षोन्तःकफोव्यवस्थित : । मध्येआमाशयमारभ्यनाभ्यन्तेपित्तं व्यवस्थितम् । अन्तेनाभ्यधोभागेवायुर्व्यवस्थित: । शिरोमूलत्वात्देहस्यवपूर्वादिकाख्यता । अङ्गस्त्रिधाविभक्तस्यपूर्वभागेकफोमध्येपित्तमन्तेवायु : । एवंरात्रेरपिवयसोपिपूर्वभागेबाल्यावस्थायांश्लेष्मामध्येतरुणावस्थायांपित्तम्अन्तेवृद्धावस्थायांवायु : । सन्धिष्विति । देहाहोरात्रिवयसामिथ्येव । तत्रदेहस्यपूर्वभागमध्यभागयो : सन्धौकफोव्यवस्थित: मध्यभागान्त्यभागयो : सन्धौपक्वाशयाख्योवायु : एतच्चयथासङ्ख्यमिस्वतोलभ्यते । अह : सन्धौराल्या-

साकाले : सन्धि : प्रात : संज्ञकस्तस्मिन्कफ : । अह्नसायंरात्रे : सन्धि : सायंतस्मिन्वात : । वय: सन्धौबाल्यतारुण्ययो: सन्धौश्लेष्मा तारुण्यवृद्धत्वयो : सन्धौवायुरिति ॥ कृष्णसेऽसौ । कृत्स्नौ । कृजेष्टिलोपक्वेतिकल : ॥ मलयति । मल तत्क्,तौ० अदन्त : । मलनीया । मलधारणे । पञ्चाद्यच् ॥ कर्पूरे ॥ त्रि० कृपणे । कदर्थ्ये ॥

मलघ्न : । पुं० शाल्मलीकन्दे । त्रि० मलनाशके ॥

मलघ्नी । स्त्री० नागदमन्याम् ॥

मलजम् । न० पूये ॥ त्रि० मलोद्भवे ॥

मलदूषित : । त्रि० मलिने ॥ मलैर्दूषित : । कर्त्तृकरणेकृतिसमास: ॥

मलद्रावी । पुं० जयपाले ॥

मलधी: । पुं० कामिनि ॥

मलन : । पुं० पटवासे । अंशुकालये ॥ न० मर्दने । पीडना० मलना० च० भा० ॥

मलपू : । स्त्री० काकोदुम्बरिकायाम् ॥ मलपूस्तम्भकृत्तिक्ताशीतला तुवराजयेत् । कफपित्तव्रणश्वित्रकुष्ठपाण्डुर्शकामला : ॥ मलात्पापात् । पुनाति । पूञ्पवने । क्विप् ॥

मलभुक् । पुं० काके ॥

मलभेदिनी । स्त्री० कटुकायाम् ॥

मलमास : । पुं० अधिमासे । मलि

म् ॥ हस्तिन्याम् ॥

मलापकर्षणम् । न० पापमोचने ॥ मलस्य दूरीकरणे ॥

मलापहा । स्त्री० नदीविशेषे ॥ यथा । मलापहाभीमरथीचघट्टगायथाचक्राख्याजलसाम्यगागुणैः । मलापहाघट्टगयोस्तथापिपथ्यंलघुस्वादुतरं-सुकान्तिदम् ॥

मलावहम् । न० मलिनीकरणे । पापविशेषे ॥ यथा । कृमिकीटवयोघ्यामद्यानुगतभोजनम् । फलैधः कुसुमस्तेयमधैर्यञ्चमलावहम् ॥

मलारिः । पुं० सर्वक्षारे । सावन० कु० भा० ॥

मलिनम् । न० दोषे ॥ टङ्कणे । घोले ॥ त्रि० मलयुक्तवस्तुनि । मलीमसे । कच्चरे । मलदूषिते ॥ यथा । यथाभवतिबालानांगगनंमलिनंमलैः । तथाभवत्यबुद्धानामात्मापिमलिनोमलैरिति ॥ मलैः क्लेशकर्मफलैरात्मा । अन्यचमलैर्घनरजोधूमादिभिराकाशइत्यर्थः ॥ निष्यन्नैमित्तिकक्रियात्यागिनि ॥ कृष्णे ॥ दूषिते ॥ मलोस्यास्ति ज्योत्स्नातमिस्रेतिसाधुः ॥ यद्वा । मलते । मल० । वहुलमन्यत्रापीतीनच् ॥

मलिनमुखः । पुं० वह्नौ ॥ गोलाङ्गूले ॥ वृगे ॥ प्रेते ॥ त्रि० क्रूरे । खले ॥

मलिनात्मा । पुं० कृष्णदेहे ॥ दुष्टचित्ते ॥ नपरिचयोमलिनात्मनांप्रधानम् ॥

मलिनाम्बु । न० मस्याम् ॥

मलिनास्यः । त्रि० खले ॥

मलिनिमा । पुं० कृष्णत्वे ॥ मलिनत्वे ॥ मलिनस्यभावः । इमनिच् ॥

मलिनी । स्त्री० रजस्वलायांनार्याम् । ऋतुमत्याम् ॥ मलोऽस्त्यस्याः । अतइनिठनौ ।

मलिनीकरणम् । न० मलावहे ॥

मलिम्लुचः । पुं० मलमासे ॥ यथा । तमतिक्रम्यतुरविर्यदागच्छेत् कथञ्चन । आद्योमलिम्लुचोज्ञेयो द्वितीयः प्रकृतः स्मृतः ॥ यदा दर्शान्तमासमतिक्रम्यतत्पूर्वमासान्त्यक्षणवृत्तिराशिस्थः सन्सूर्योऽतिवाह्यगच्छेत् मासान्तरे राश्यन्तरसंयोगंगच्छेत् । तदाआद्योऽतिक्रान्तमासोमलिम्लुचोज्ञेयः ॥ मलीसन्म्लोचति० गच्छतीति० मलिम्लुचः । द्वितीयस्तुप्रकृतः शुद्धः कर्मार्हत्वात् ॥ चौरे ॥ ज्वलने ॥ वाते ॥ मल्यते । मल० । कुच् । मलिंधृतंम्लोचति । म्लुच स्तेये । मूलविभुजादित्वात्कः ॥

मलिष्ठा । स्त्री० ऋतुमत्यांनार्याम् ॥

मलीमसः। पुं० पुष्पकासीसे ॥ लौहे ॥ मलिने ॥ मलोऽस्यास्ति। ज्योत्स्नातमिस्रेतिसाधुः ॥

मलूकः। पुं० कृमिविशेषे ॥

मल्लः। पुं० पात्रे ॥ कपोले ॥ मत्स्यभेदे ॥ बलीयसि ॥ झल्लः। निच्छिवी। बाहुयोधिजि० मल्लितिनाम्नाप्रसिद्धे ॥ अयस्त्रात्यात् क्षत्रियात्सवर्णायांजातः। यथा मनुः। झल्लोमल्लश्चराजन्याद्व्रात्यान्निच्छिविरेवच। नटश्चकरणश्चैवखसोद्रविडएवच ॥ इति ॥ देशविशेषे ॥ यथा। दशार्णानवराष्ट्रश्चमल्लाःशाल्वाःयुगन्धराः। इति। विराटपर्वणि १ अध्यायः ॥ वर्णसङ्करजातिविशेषे। माला० इ० गौ० दे० भा० प्रसिद्धे ॥ अयन्तु० लेटात्तीवरकन्यायांजातः। इ० ब्र० वै० पु० ॥ तन्त्रवाय्यांतु च्छकाराज्जातः। इ० प० पु० ॥ नियुद्धकुशलोमल्लः स्मृतिस्तत्परायणः ॥

मल्लकः। पुं० दन्ते। पुं० क्ली० दीपाधारे ॥ कोषिकायाम्। नारिकेलफलनिर्मितपात्रे। मरेलो० इ० भा० ॥ मल्लते। मल्लधारणे। वुन् ॥

मल्लतूर्यम्। न० वाद्यविशेषे। मल्लास्फाले ॥

मल्लनागः। पुं० अभ्रमातङ्गे ॥ वात्स्यायनमुनौ ॥ कामशास्त्रविशेषे ॥ लिखहारे ॥

मल्लभूः। स्त्री० मल्लभूमौ ॥

मल्लभूमिः। स्त्री० रङ्गभूमौ। अखवाटे। अखाडा० इ० भा० ॥ देशविशेषे ॥

मल्लयात्रा। स्त्री० मालव्याम्। मल्लानांयुद्धार्थंप्रयाणे ॥

मल्लयुद्धम्। न० नियुद्धे। बाहुयुद्धे। मल्लानांसङ्ग्रामे ॥

मल्ला। स्त्री० नार्याम् ॥ पत्रवल्ल्याम् ॥ मल्लिकायाम् ॥

मल्लारः। पुं० षण्णांरागाणांमध्येद्वितीयरागे ॥ मेघमल्लाररागस्यगानंवर्षासुसर्वदा ॥

मल्लारी। स्त्री० वसन्तरागस्यरागिण्याम् ॥ यथा। आन्दोलिताख्येयाख्या सौभाग्यमञ्जरी। मल्लारीचेतिरागिण्योवसन्तस्यसदानुगाः ॥ मेघरागस्यरागिण्याम् ॥

मल्लिः। पुं० हस्तार्धविशेषे ॥ स्त्री० मल्लिकायाम् ॥ मल्लते। मल्ल०। सर्वधातुभ्यइन् ॥

मल्लिकः। पुं० मलिनचञ्चुचरणोहंसविशेषे। किञ्चिद्धूसरवर्णैश्चञ्चुचरणैरुपलक्षितहंसप्रभेदे ॥ मल्लते। मल्ल०। क्वुन्। स्वार्थेकः ॥

मल्लिका। स्त्री० तृणशून्ये। भूपदाम्।

। शतभीरी । वेल्लि॰ वेला॰ वेली॰ इ॰ प्र॰ पुष्पवृक्षे ॥ मल्लतिगन्धं॰ मल्यतेवा । मल्ल॰ । सर्वधातुभ्यइन् । बाडीष् । स्वार्थेकन् । ह्रस्वः । टाप् ॥ मल्लिकीष्णालघुर्वष्याति क्ताचकटुकाहरेत् । वातपित्तास्रह ग्व्याधिकुष्ठारुचिविषव्रणान् ॥ मी नविशेषे ॥ मृत्पात्रविशेषे ॥ पान पात्रे ॥ सर्वैव्यान्तर्गतवृत्तविशेषे ॥ यथा । अशेषगुणाधिकशोभनशोभम सौरभयुद्ध्वविशुद्धयगते॰ विधेहिवि धेहिविवेकनिधेहिपुरोजगवानिह सप्तलगौसुमते । बिशोभियशोभिरु पेतितयेतिविनिर्मितमल्लिकयेशर- ते॰ निधेहिनिधेहिमुदंहृदयेसदये यशमन्तधराधिपते ॥ वर्णवृत्तान्तरे ॥ यथा । हारमञ्जकाक्कमेणमण्डिताष्ट वर्णकेन । बर्धिताकुतूहलेनमल्लिके पिङ्गलेन ॥ यथा । वेदवेदिवाक्लखि ल्यनारदादिसंस्तुताय । अस्तुमेन तिः सदैवतुभ्यमम्बुजप्रियाय ॥ भू पदीपुष्पे ॥ मल्लिकाया : पुष्पम् । पुष्पमूलेषुवहुलमिति॰ अनुदात्ता देरञोऽणस्त्रलुप् । लुपियुक्तिवत् ॥ वर्णपात्रे ॥ इ॰ श॰ माला ॥

मल्लिकाच्चः । पुं॰ किञ्चिद्धूम्रवर्णैश्चञ्चु च रणैरुपलक्षितेहंसविशेषे ॥ शुक्लव र्णवेष्टितचञ्चुर्द्वययुक्ताक्षे । मल्लिका कारमचियस्यशुक्लापाङ्गत्वात् । व ह्रीहीस्सक्थ्यक्ष्णोरितिषच् ॥

मल्लिकाख्य : । पुं॰ मल्लिकाक्षाभिधे हंसे ॥

मल्लिकाख्या । स्त्री॰ मोहिन्याम् । त्रि पुरमालीतिगौडदेशप्रसिद्धेपुष्पे ॥

मल्लिकागन्धम् । न॰ मल्लिकागुरुणि ।

मल्लिकापुष्प : । पुं॰ कुटजवृक्षे ॥ कव णवृक्षे । करुणालेवु॰ इ॰ गौ॰ दे॰ भा॰ ॥ स्वनाम्नाप्रसिद्धेपुष्पवृ क्षे ॥

मल्लिगन्धि । न॰ मङ्गल्यागुरुणि ॥ म ल्लिकापुष्पस्येवगन्धोयस्य । उपमा नाच्चेति॰ इत् ॥

मल्लिपत्रम् । न॰ छत्राके ॥

मल्ली । स्त्री॰ मल्लिकायाम् ॥

मल्लीकर : । त्रि॰ चौरे ॥

मल्लु : । पुं॰ भालूके ॥

मवित : । त्रि॰ बद्धे ॥

मशक : । पुं॰ कीटविशेषे । वसातु ण्डे । सूच्यास्ये । रात्रिजागरदे । मच्छर॰ इतिभाषा ॥ तन्नाशकधू पोयथा । त्रिफलार्जुनपुष्पाणिभल्ला तकशिरीषकम् । लाक्षासर्जरस सैन्धवविडङ्गस्थवगुग्गुलु : एतैर्धूपै र्मक्षिकाणांमशकानांविनाशनम् ॥ क्षुद्ररोगविशेषे । मस्सा॰ इ॰ भा॰ प्रसिद्धे ॥ यथा । अवेदनंस्थिरंचैव यस्तुगात्रेप्रदृश्यते । माषवत्कृष्णमु त्सन्नमनिलेनमशकंदिशेत् ॥ स्थिर

म०भवत्तम् ॥ कथंचिकित्साययथा । चर्मकीलंजतुमणिंमशकांस्तिलकालकान् । उत्कृत्यमस्त्रेणदहेत्क्षाराग्निभ्यामशेषतः ॥ अनिच । ल शुनानाल्लुपूर्ण्यघर्षोमशकनाशनः ॥ इति ॥

मशकी । पुं० उदुम्बरवृक्षे ॥

मशहरी । स्त्री० चतुष्क्यान् । मशक तिरस्करिण्याम् ॥

मशुन: । पुं० कुक्कुरे ॥

मसनम् । न० सोमराजीवृक्षे ॥

मसरा । स्त्री० मसूरे ॥

मसार: । ) पुं० इन्द्रनील
मसारक: । ) पुं० मणौ ॥

मसि: । स्त्री० लिपिप्रयोजनायाम् । मषाञ्जने । मस्याम् ॥ मस्यति । मसीपरिमाणे । इन् ॥ शेफालिकावृक्षे ॥

मसिकूपी । ) स्त्री० मस्या-
मसिधानम् । ) न० धा-
मसीधाना । ) स्त्री० रे ।
मसिकूपिकायाम्

मसिनम् । न० सपिंडके ॥

मसिपथ्य: । पुं० लेखके ॥

मसिप्रसू: । स्त्री० मस्याधारे ॥ मस्या: प्रसू: ॥ लेखन्याम् ॥

मसिमणि: । पुं० मस्याधारे ॥

मसिवर्द्धनम् । न० रसगन्धे ॥

मसी । स्त्री० मेलायाम् । लिपिसाधन विशेषे । कालो० इ०गौ०भा० । स्थाली० इ० माषा० ॥ शेफालिकावृक्षे । मस्यति । मसी० । पचाद्यच् । गौरादित्वान्ङीष् ॥

मसीजलम् । न० मस्याम् ॥

मसीधानम् । न० मस्याधारे ।

मसीधानी । स्त्री० मस्याधारे ॥

मसीना । स्त्री० खनाम्नाख्यातेधान्ये । क्षमायाम् ॥

मसीय: । पुं० कायस्थे ॥ मस्याढ्य: ॥

मसुर: । पुं० मसूरे । मङ्गल्यके ॥ म स्यति० मस्यतेवा । मसी० । मसेरुरन् ॥ उपधाने ॥ मसुरा । स्त्री० वेश्यायाम् ॥ व्रीहिप्रभेदे ॥ टाप् ॥

मसुरी । स्त्री० पापरोगे । मसूर्याम् ॥

मसूर: । पुं० व्रीहिप्रभेदे । मङ्गल्यके ॥ मसूरोमधुर:पाकेसङ्ग्राही शीतलोलघु: । कफपित्तास्रजिद्रूक्षोवातलोज्वरनाशन: ॥ मस्यति० मस्यतेवा । मसी० । मसेरूरन्निति पाञ्चमिकऊरन् । उपधाने ॥

मसूरक: । पुं० उपबर्हविशेषे । चातुरे । चक्रगण्डौ । गोलसिह्या ना०इ०भा० ॥ मसूरे ॥ स्वार्थे क: ॥

मसूरविदला । स्त्री० कृष्णात्रिवृतायाम् ॥ मसूरवद्विदलमस्या: ॥

मसूरा । स्त्री॰ मसूर॰द्र॰ प्रसिद्धे व्रीहिभेदे । मङ्गल्यके ॥ वेश्यायाम् ॥ टाप् ॥

मसूरिका । स्त्री॰ कुट्टन्याम् ॥ मङ्गल्यके ॥ मसूरीरोगे । शीतलाख्यरोगे ॥ मसूराकृतिसंस्थानाःपिडकाःस्युर्मसूरिकाः ॥ अतीसारे ॥ मसूरचर्याम् ॥ यथोक्तं पाकक्रियायोगसारे । दंशांश्चमशकांश्चैवमर्षाकादीन्निवारयेत् । मसूरिकाभिः प्राज्ञश्चमञ्चशायिनमुच्युतमिति ॥

मसूरी । स्त्री॰ पापरोगे । रक्तवत्याम् । शीतलाख्यरोगे ॥ चिन्नति ॥ रक्तचिन्नति ॥

मसृण: । पुं॰ सोमे ॥ त्रि॰ चक्कणे । अकठिने ॥ स्निग्धे ॥ मस्यति । मसी॰ बाहुलकात्॰ ऋण: ॥ यद्वा । समृच्छ्णोति । ऋणुगतौ ॥ पृषोदरादि: ॥

मसृणा । स्त्री॰ उमायाम् । अतस्याम् ॥

मस्कर: । पुं॰ वेणौ । वंशे ॥ मस्कतेऽनेनवा । मस्कगतौ । बाहुलकादर: ॥ यद्वा । मङ्कते।मकिमण्डने। अर: । आगमशास्त्रस्यानित्यत्वान्नुम् । मस्करमस्करिणौवेणुपरिव्राजकयोरितिसुट् ॥ रन्ध्रवंशे ॥

मस्करी । पुं॰ परिव्राजके । भिक्षौ । संन्यासिनि ॥ मस्कनम् । मस्कगतौ । बाहुलकादर: । मस्करोज्ञानं गतिर्वाऽस्यास्ति । मस्करमस्करिणावितीनि: ॥ यद्वा । मस्करोवेणुरस्यास्ति । इनि: ॥ यद्वा । माकर्तुं कर्म निषिद्धं शीलमस्य । मस्करमस्करिणावितिसाधु: ॥ यद्वा । मकुरस्तुस्यमुडमन्त: करणमस्यास्ति । प्राग्वन्निपात: ॥ यद्वा । मङ्कते । मकि॰ । बाहुलकादर: आगमशास्त्रस्यानित्यत्वान्नलुम् ॥ मकरोनिषिद्धोरोबाऽस्यास्ति । पूर्ववन्निपात: ॥ चन्द्रे ॥

मस्तम् । न॰ मस्तके ॥ मस्यतेऽस्मिन् । मसी॰ । क्त: ॥

मस्तक: । पुं॰ न॰ उत्तमाङ्गे । शिरसि । मूर्द्धनि ॥ स्वार्थेकन् ॥

मस्तकस्नेह: । पुं॰ शिरोमज्जनि ॥

मस्तकाख्य: । पुं॰ शिखरे ॥ वृक्षशिरसि ॥ मस्तकमित्याख्यायस्य ॥

मस्तदारु । न॰ देवदारुणि ॥

मस्तमूलकम् । न॰ शिरोधौ ॥

मस्तिष्कम् । न॰ गोर्दे । मस्तकस्थघृताकारस्नेहे ॥ मस्यते॰ मसनं वा॰ । मसी॰ । क्विन् । मस्तिं मस्कते । मस्कगतौ । पचाद्यच् । पृषोदरादि: ॥

मस्तु । न॰ दधिभवमण्डे । दधिजले । तोड॰ इ॰ भाषा ॥ दध्नस्तूपरियोभागोघन: स्नेहसमन्वित: । स लोकेसरइत्युक्तोदध्नोमण्डस्तुमस्त्विति ॥ मस्तुक्लमहरंवल्यं लघुभुक्ता-

भिलापघ्नम् । स्रोतोविशोधनं ह्रा दिवमलतृष्णानिलापहम् । अहृद्यं प्रीणनंशीघ्रं भिन्नत्त्विमलसङ्ग्रहम् । अमिव । उष्णाऽम्लं रुचिदित्तरंभ्रम हरं बल्यं कषायं सरं भुक्तिच्छन्दकरं ल घोदरगदप्लीहार्शःसांनाशनम् । स्रो तः शुद्धिकरं कफानिलहरं विट्बन्ध-शूलापहम् मागद प्रासविकाष्ठगुल्म शमनं मस्तुप्रशस्तं लघु ॥ मद्यसे । मसी० । सितनीतिलत् ॥

मस्तुलुङ्गः । पुं० मस्तकस्थघृताकार स्नेहे । मस्तिष्के ॥

मस्तुलुङ्गकः । पुं० मस्तिष्के ॥

महः । पुं० उत्सवे । तेजसि ॥ महिषे ॥ महनम् । महपूजायाम् । घञ् । संज्ञापूर्वकत्वाद् वृद्ध्यभावः । घोवा ॥ यद्वा । महति । अच् । यज्ञे ॥

महकः । पुं० बहुलामोदे । महकः० कू० भा० ॥

महत् । न० राज्ये ॥

महान् । पुं० ज्ञानक्रियाशक्तिमतिमहत्तत्त्वे । बुद्धितत्त्वे । अध्यवसाय लक्षणे ॥ यथा । सविकारात्प्रधानात्तु महत्तत्त्वं प्रजायते । महानिति यतः ख्यातिर्लोकानां जायते सदा ॥ सर्वकार्यापेक्षयाऽधिकत्वात् कारणे० हिरण्यगर्भे । प्रथमजे ॥ दुर्गायाम् । महान्व्याप्य स्थितासर्व महान्वाप्रकृतिर्मतेतिदेवीपुराणात् ॥ उष्ट्रे ॥ नवधाभक्तियुक्तशीलधर्मभक्ते • शिवशैवधर्मादौ ॥ द्वि० हद्धे । विशङ्कटे । बृहति । विशाले । बड्डे । विपुले । उत्कटे ॥ अतिप्रमाणे । अप्रमेये । आपातमधुरसांसारिकसुखनिस्पृहे ॥ यथा । महन्तो मांसारमाह्वविंदुम्नसमीहा रंयोजितासङ्गिसङ्गम् । महान्तस्ते समचित्ताः प्रशान्ताविमन्यवः सुहृदः साधवोये ॥ महति । मह० । वर्त्तमानेपृषद्वृहन्महज्जगदितिनिपातितः ॥ महतेवा । महच्छब्दप्रयोगनिषेधोयथा । महद्भिर्वैतयासां सेवैषा ज्योतिषिकैर्द्विजैः । याचायांपथिनिन्द्रायांमहच्छब्दोनदीयते ॥ इति ॥ देशादिपरिच्छेदशून्ये सर्वगतेपरमात्मनि ॥

महती । स्त्री० नारदस्यवल्लक्याम् ॥ शततन्त्रीवीणामहतीति० स्वामी ॥ विततायाम् ॥ बृहत्प्रमाणायाम् ॥ बृहत्याम् ॥ वार्त्ताक्याम् ॥ महते । मह० । वर्त्तमानेपृषदिति साधुः । गौरादिः ॥

महतीद्वादशी । स्त्री० श्रवणद्वादश्याम् । वामनद्वादश्याम् ॥

महत्तत्त्वम् । न० चतुर्विंशतितत्त्वान्तर्गतद्वितीयतत्त्वे । प्रकृतेरुत्पन्ने समष्टिबुद्धिस्वरूपे ॥ तत्पर्यायाश्च ...म

भारते । यथा । महानात्मामति
र्विष्णुर्जिष्णुः शम्भुस्तुवीर्यवान् ।
बुद्धिः प्रज्ञोपलब्धिश्च तथाख्याति
र्धृतिःस्मृतिः ॥ पर्यायवाचकैः श
ब्दैर्महानात्माविभाव्यते ॥

महत्तरः । पुं॰ शूद्रविशेषे । ग्रामकू
टे । महत्ता॰ इ॰ भा॰ ॥ इ॰ त्रि॰
काण्डशेषः ॥

महत्युक्थम् । न॰ हस्तीसहस्राख्य
शस्त्रे ॥

महत्त्वम् । न॰ महतोभावे । यथा ।
महत्त्वंषड्विधेहेतुरिन्द्रियंकरणंमतम्
। इ॰ भा॰ प॰ । महत्त्वंषड्विधइ
ति । द्रव्यप्रत्यक्षेमहत्त्वंसमवायसम्
बन्धेनकारणम् । द्रव्यसमवेतानां
गुणकर्मसामान्यानांप्रत्यक्षे॰ स्वाश्र
यसमवेतसमवायसम्बन्धेनकारणम्
। इ॰ सिद्धान्तमुक्तावली ॥ स्वाध्यस्त
सर्वसम्बन्धित्वे ॥ श्रेष्ठतायाम् ॥

महत्तृष्णा । स्त्री॰ हस्तिघोषायाम् ॥

महद्ब्रह्म । न॰ अव्याकृते॰ प्रकृतौ॰
त्रिगुणात्मिकायांमायायाम् ॥ स-
र्वकार्यापेक्षयाधिकत्वात्कारणंमह
त्॰सर्वकार्याणांवृद्धिहेतुत्वरूपात्॰
बृंहणत्वाद्वा॰ ब्रह्मत्वाद्वा॰ ब्रह्मच
भवत्यव्याकृतम् ॥ महच्चतद्ब्रह्मचे
तिविग्रहः ॥

महद्भूतम् । न॰ परमात्मनि ॥ महत्
ब्रह्मविद्योत्कर्षेणवर्त्तमानत्वात्॰भू
तंपरमार्थसत्यम् । महच्चतद्भूतञ्च ॥

महनीयः । त्रि॰ पूजनीये ।

महर्घता । स्त्री॰ अधिकन्यूनत्वे ॥

महर्द्धिः । स्त्री॰ समृद्धौ । ऋद्धेराधि
क्ये ॥

महर्लोकः । पुं॰ भूरादिसप्तलोकान्त
र्गतचतुर्थलोके ॥ चतुर्मुखदिनस्या
न्तेजगदेतत्त्रयात्परम् । तदादिस्य
तेसर्वैर्लोक्यंभूर्भुवादिकम् ॥ जन
प्रयान्तितापार्त्तामहर्लोकनिवासि
नः ॥ चतुर्थेतुमहर्लोकेतिष्ठन्ति कल्प
वासिनः ॥ अपिच । महोहिकोटि
र्यत्रास्तेमरीच्यादिमुनिव्रजः ॥ भृ-
ग्वादिकोऽथ कश्यपोमरीच्यादिमुनि
इत्यस्यार्थानंमहर्लोकइत्यर्थः ॥

महर्षभी । स्त्री॰ कपिकच्छ्वाम् ॥

महर्षिः । पुं॰ व्यासादिषु ॥ ऋत्वा
दिसप्तसु ॥ वेदतदर्थद्रष्टृषु॰ सर्वज्ञे
षु॰ विद्यासम्प्रदायप्रवर्तकेषु ॥ भृ
गुंमरीचिमत्रिञ्चपुलस्त्यंपुलहंक्रतु
म् । वसिष्ठञ्चमहातेजाः सोऽसृजन्
मनसासुतान् ॥ सप्तब्रह्माणइत्येते
पुराणेनिश्चयङ्गताः ॥ महांश्चासौ॰
ऋषिश्च । कृत्स्नस्यवेदस्यदर्शनात् ।
। अन्येतुवेदैकदेशदर्शनादृषयः ॥

महल्लकः । पुं॰ अन्तःपुररक्षके ।
सौविदल्ले । कञ्चुकिनि ॥ महती
लाति । ला॰ । क : । कः ॥

महल्लिकः । पुं॰ अन्तःपुररक्षके ।

महाकोषफला । स्त्री० देवदालीलतायाम् ॥

महाकोषल : । पुं० देशविशेषे ॥ यथा । गोकर्णाग्रात्पूर्वभागेन्यायोवित्तात्तुचोत्तरे । तौरभुक्तात्पश्चिमेतु महापुर्याश्चलर्वत : । महाकोषलदेशश्च सूर्यवंशपरायण : ॥

महाकोषातकी । स्त्री० हस्तिघोषायाम् । नेनुवां० घीयातोरई० इ० भा० प्र० शाकि ॥ महाकोषातकी स्निग्धासरापित्तानिलापहा ॥

महाक्रतु : । पुं० अश्वमेधे ॥ महांश्चासौक्रतुश्च ॥

महाखर : । पुं० अश्वतरे ॥

महागद : । पुं० ज्वरे ॥

महागन्ध : । पुं० कुटजवृक्षे ॥ अम्बुवेतसे ॥ न० हरिचन्दने ॥ महान्गन्धोयस्य० यस्मिन्वा ॥ बोले ॥

महागन्धा । स्त्री० चामुण्डायांदेव्याम् ॥ केविकापुष्पे ॥ नागबलायाम् ॥

महागर्त : । पुं० गर्ते । वमगर्ते ॥

महागिरि : । पुं० वीटभेदे ॥ वृहत्पर्वते ॥

महागुरु : । पुं० मातरि ॥ पितरि ॥ आचार्ये ॥ यथा । मातापितानवश्च दातामहान्तोगुरव : स्मृता : । इति ॥ महांश्चासौगुरुश्च । आन्नस्तद्भ्यात्वम् ॥ स्त्रिया : पतिरेवम हागुरु : ॥

महागुल्मा । स्त्री० सोमवल्ल्याम् ॥

महागुहा । स्त्री० पृश्निपर्ण्याम् ॥

महागोधूम : । पुं० पश्चाद्देशभवेगोधूमविशेषे । वडा० गोहूं० इ० भाषा ॥

महाग्रह : । पुं० सूर्ये ॥

महाग्रीव : । पुं० उष्ट्रे ॥ त्रि० वृहत्ग्रीवायुक्ते ॥

महाघूर्णा । स्त्री० सुरायाम् ॥ महतीघूर्णायस्याद्यया ॥

महाघोर : । त्रि० अतिशयभयानके ॥

महाघोष : । पुं० अतिघोषवति । महाशब्दे । न० हट्टे । आपणे ॥ त्रि० उच्चशब्दयुक्ते ॥

महाघोषा । स्त्री० कर्कटशृङ्ग्याम् ॥ कुन्दुरुवल्ल्याम् ॥

महाङ्ग : । पुं० उष्ट्रे ॥ महान्त्यङ्गान्यस्य । अनेकानीतिबहुव्रीहि : ॥ गोक्षुरकि ॥ महामूषिके ॥ रक्तचित्रके ॥ त्रि० वृहद्दवयवयुक्ते ॥

महाचञ्चु : । पुं० वृक्षचञ्चुमतिच्छगे ॥ शाकविशेषे । तृणचञ्चुकायाम् । दीर्घपत्र्याम् । दिव्यगन्धायाम् ॥

महाचण्ड : । पुं० कालकर्मणि ॥ त्रि० प्रचण्डे ॥

महाचीन : । पुं० देशविशेषे ॥ यथा कैलासीरंसमारभ्यसरयूपश्चि : प-

महाढ्य: । पुं० कदम्बे ॥ त्रि० अतिशयधनवति ॥

महातपा: । पुं० विष्णौ ॥ महत्सृष्टिविषयं तपोज्ञानमस्य । ऐश्वर्यं प्रतापोवामहदस्य ॥

महातमप्रभा । स्त्री० अतिशयान्धकारमयेनरकविशेषे ॥

महातरु: । पुं० स्नुहीवृक्षे ॥ वृहद्वृक्षे ॥

महातलम् । न० पातालप्रभेदे ॥

महातारा । स्त्री० जिनानांदेवीविशेषे ॥

महाताली । स्त्री० आवर्त्तक्याम् ॥

महातिक्त: । पुं० महानिम्बे ॥ त्रि० अतिशयतिक्तरसयुक्ते ॥

महातिक्ता । स्त्री० यवतिक्तायाम् ॥ पाठायाम् ॥

महातीक्ष्णा । स्त्री० भल्लातकवृक्षे ॥ त्रि० अतिशयतीक्ष्णे ।

महातुम्बी । स्त्री० राजालाब्वाम् ॥

महातेजा: । पुं० अग्नौ ॥ कार्त्तिकेये ॥ विष्णौ ॥ यथा । तेजस्विनोयदोयेनतेजसाभास्करादय: । तत्तेजोमहदस्येतिमहातेजा: सईश्वर: ॥ शौर्यधीर्यादिभिर्धर्मैर्महद्भि: समलङ्कृत: । इतिवास्यान्महातेजा: अनुपातनईश्वर: ॥ न० पारदे ॥ त्रि० अतिशयतेजस्विनि ॥ महत्प्रकृष्टंतेजोयस्य

[illegible] ॥

महात्मा त्रि० महामनसि । महाशये ॥ अथवाशुद्धात्म: कारणत्वाज्जीवन्मुक्ते ॥ सर्वोत्कृष्टे ॥ रजस्तमोमलरहितान्त: करणे । शुद्धसत्त्वे । समुत्पन्नसम्यग्दर्शने ॥ साधूनामभयदायके । परमोदारचित्ते ॥ परमकारुणिके ॥ सर्वेश्वरे० सर्वज्ञे० परमात्मनि ॥ अनुवृत्तौ ॥ महाननेकजन्मसुकृतै: संस्कृत: चुद्रकामाद्यनभिभूत: ० आत्मा ।० अन्त: करणंयस्यस: ॥ महांश्चासावात्माचेतिवा ॥

महात्यय: । पुं० चतुर्थके० विषमज्वरे ॥ गम्भीरे ॥ महातिकष्टे ॥

महादण्ड: । पुं० यमदूतप्रभेदे ॥

महादन्त: । पुं० गजदन्ते । दीर्घदन्ते ॥ वृहद्गजमात्रे ॥ त्रि० तद्वति ।

महादानम् । न० श्रेष्ठदाने । तुलापुरुषादिषोडशप्रकारे ॥ यथा । आद्यन्तुसर्वदानानांतुलापुरुषसंज्ञितम् । । हिरण्यगर्भदानञ्चब्रह्माण्डंतदनन्तरम् ॥ कल्पपादपदानञ्चगोसहस्रन्तुपञ्चमम् । हिरण्यकामधेनुश्चहिरण्याश्वस्तथैवच । पञ्चलांगलकंतद्वद्धरादानंतथैवच । हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा । द्वादशंविष्णुचक्रञ्चतत: कल्पलतात्मकम् । सप्तसागरदानञ्च रत्नधेनुस्तथैवच । महाभूतघटस्तद्

तृप्तोऽस्य : परिकीर्त्तितः ॥

महादारु । न० देवदारुणि ॥

महादाह : । पुं० नरकान्तरे ॥

महादेव : । पुं० शिवे ॥ महांश्चासौदेवश्च । आन्महतद्रूत्यात्त्वम् ॥ महान्देवोनृत्यादिरूपाक्रीडायस्येतिवा ॥ ब्रह्मादीनांसुराणाञ्चमुनीनांब्रह्मवादिनाम् । तेषाञ्चमहतोदेवोमहादेवःप्रकीर्त्तितः ॥ महतीपूजिताविश्वे मूलप्रकृतिरीश्वरी । तस्यादेवः पूजितश्चमहादेवः सचस्मृतः ॥ इ० ब्र० वै० पु० ॥ सर्वदेवानांमहनीयत्वाच्चमहादेवः । तथोक्तं साम्बपुराणे । पूज्यतेयत्सुरैः सर्वैर्महांश्चैव प्रमाणतः । धातुर्महइतिपूजायांमहादेवस्ततस्मृतः ॥ स्कान्देपि । महतामपिदेवनामहमेवमहान्यतः । नतुमत्तोमहानन्योमहादेवस्ततोह्यहमिति ॥ कोटयोब्रह्महत्यानामगम्यागमकोटयः । सद्यः प्रलयमायान्तिमहादेवेतिकीर्त्तनात् ॥ महादेवमहादेवमहादेवेतिवादिनम् । वत्सं गौरिवगौरीशोधावन्तमनुधावति ॥ अन्योऽन्यमथवं शिरसि । सर्वान्भावान्परित्यज्यात्मज्ञानयोगैश्वर्ये महतिमहीयतेतस्मादुच्यतेमहादेवइति । अस्यार्थोविष्णुसहस्रनामभाष्यटीकायांद्रष्टव्यः ॥

महादेवी । स्त्री० दुर्गायाम् ॥ महतोब्रह्मादीनपिदेवयतिक्रीडादिभिर्व्यवहारयति० इतिमहादेवी । दिवु० । अच् । टित्वान्ङीप् ॥ पूज्यतेयासुरैः सर्वैर्महतीचप्रमाणतः । धातुर्महइतिपूजायांमहादेवीततःस्मृता इतिदेवीपुराणम् । सर्वेदृश्यंमहादेवी द्रष्टासाक्षीचसैवहीतिदेवीभागवतम् । द्रष्टाजीवः साक्षी० ईश्वरः० दृश्यंसर्वंजगत्० इदंत्रयं सैवभगवती भवतीत्यर्थः ॥ राज्ञ्याम् । महिष्याम् । पट्टदेव्याम् ॥

महादैत्य : । पुं० भौत्यमन्वन्तरीयदैत्यविशेषे । उत्कृष्टदैत्ये ॥

महाद्युतिः । त्रि० ईश्वरे ॥ महतीबाह्याभ्यन्तरव्यापिनीद्युतिर्यस्य तन्नलक्षणात्यकामादिपराभवेनस्वहितसाधनोन्मुखे० पुरुषर्षभे । महतीद्युतिरस्य ॥

महाद्रिधृक् । पुं० हरौ महान्तमद्रिं मन्दरं गोवर्द्धनंवाऽमृतमथनेगोरक्षणेवाधृतवानितिव्युत्पत्तिः फलितार्थकथनपरा । वस्तुतस्तुमहाद्रयेधृष्णोति० धर्त्तुम्प्रगल्भते । ञिधृषाप्रागल्भ्ये । क्विप् । क्विन्प्रत्ययस्यकुः ॥

महाद्रुमः । पुं० अश्वत्थे ॥ महांश्चासौद्रुमश्च ॥ बृहद्वृक्षे ॥

महाद्रोणा । स्त्री० देवकुरुम्बायाम् । दिव्यपुष्पायाम् ॥

महाद्रवी । स्त्री० महाद्रोणाक्षुपे ॥
महाद्रनुह : । पुं० युद्धवाद्ये ॥ अतिक्ष लडे ॥
महाधनम् । न० महामूल्ये । बहुमूल्ये वस्तुनि । महगी० हू० भा० । सुवर्णे ॥ सिह्लके ॥ चारुवाससि ॥ महद्धनंमूल्यमस्य ॥ कृषिकर्म्मणि ॥ त्रि० अतिशयधनयुक्ते ॥
महाधातु : । पुं० स्वर्णे ॥
महाध्वग : । पुं० उष्ट्रे ॥
महानट : । पुं० महादेवे ॥
महानद : । पुं० नदविशेषे ॥
महानदी । स्त्री० पुरुषोत्तमक्षेत्रान्तर्गतनदीविशेषे । त्रिपोतुपलायाम् ॥ गङ्गायाम् ॥ यथा । अम्बुजमम्बुनिजातंजातुनजायतेम्बुजादम्बु । मुरहरतत्रविपरीतंपदाम्बुजाद्यन्महानदीजाता ॥
महानन्द: । पुं० सुक्तौ ॥ अधिकाह्लादे ।
महानन्दा । स्त्री० अमृतायाम् । सुरायाम् ॥ माघशुक्लनवम्याम् ॥ नदीविशेषे । देवीविशेषे । अट्टहासेमहानन्दादेवी ॥
महानन्दि : । पुं० नन्दिस्वर्णनाम्नोराजपुत्रे ॥
महानरक: । पुं० अतिशयनानाप्रकारयातनास्थाने ॥
महान : पु० वृहदग्नौ ॥ दैवनवी ।

महानवमी । स्त्री० आश्विनशुक्लनवम्याम् ॥
महानसम् । न० पाकस्थाने । रसवत्याम् ॥ तत्ररक्षणीयजननामान्युक्तानि यथा । सूदशास्त्रविधानज्ञा: पराऽभेद्या : कुलोद्गता : । सर्वेमहानसेधार्या : कृत्तकेशनखाजना: ॥ इति ॥ पुंल्लिङ्गोप्ययमितिकश्चित् ॥ महच्चतदनश्च । अनोऽश्माय : सरसांजातिसंज्ञयोरितिसंज्ञायांटच् ॥
महानसाधिकृत : । त्रि० पौरोगवे ॥ महानसेऽधिकृत : ॥
महानाटकम् । न० हनुमन्नाटके ॥ नाटकविशेषे ॥
महानाडी । स्त्री० कण्डरायाम् ॥
महानाद : । पुं० कुञ्जरे ॥ वर्षुकाब्दे ॥ महाध्वने ॥ ध्वनिमद्दे । कर्णे ॥ सिंहे ॥ उष्ट्रे ॥ शङ्खे ॥ कोलाहलायाम् ॥ महान्नादोयस्यस: ॥
महानिद्रा । स्त्री० मरणे ॥
महानिम्ब: । पुं० पवनेष्टे । पार्वते । वकायन० ट्रेक० डेक० हू० भाषा । महानिम्बोहिमोरूक्षस्तिक्तोग्राहीकषायक : । कफपित्तक्रमिच्छर्दिकुष्ठहृल्लासरक्तजित् ॥ प्रमेहश्वासगुल्मार्शोमूषिकाविषनाशन:॥
महानिशा । स्त्री० निशामध्यभागे । निशीथे ॥ रात्रेर्मध्यस्थप्रहरद्वये ॥

यथा । महानिशातुविज्ञेयामध्यस्थंप्रहरद्वयम् । तत्रस्नानंनकुर्वीत काम्यनैमित्तिकादृते ॥ अन्यत्तु महानिशासार्द्धप्रहरोपरिप्रहरद्वयमिति रघुनन्दनः । देवलोक्तमहानिशारात्रिमध्यमदण्डद्वयात्मिकासाद्वितीयप्रहरशेषदण्डतृतीयप्रहरप्रथमदण्डरूपा ॥

महानीचः । पुं॰ रजके । अतिशयहीनवर्णे ॥

महानीलः । पुं॰ भृङ्गराजे ॥ नागविशेषे ॥ सिंहलद्वीपाकरोद्भूते॰ मणिविशेषे ॥ सिंहलस्याकरोद्भूतामहानीलास्तुतेस्मृताद्गुणगण्योक्ताः ॥ तल्लक्षणं यथा । यस्तुवर्णस्यभूयस्त्वात् क्षीरेशतगुणेस्थितः । नीलतांतनुयात्सर्वंमहानीलः सउच्यते ॥ इतिगारुडे॰ ७२ अध्यायः ॥

महानीला । स्त्री॰ महाजम्ब्वाम् ॥

महानीली । स्त्री॰ नीलापराजितायाम् ॥ बृहन्नील्याम् । श्रीफलिकायाम् । केशार्द्रायाम् ॥

महानुभावः । पुं॰ श्रीहरौ ॥ महाशये । सुकृतिनि ॥ महामाहात्म्ये ॥ महान्श्रुताध्ययनतपश्चाचारादिनिबन्धनोऽनुभावः प्रभावोयस्यसः ॥

महान्तकः । पुं॰ महेन्द्राचलपीठस्थेशिवे ॥ स्त्री॰ देवीविशेषे ॥ महेन्द्रेचमहान्तका ॥

महापक्षः । पुं॰ बहुपुत्रादिपरिच्छदे ॥

महापञ्चमूलम् । न॰ बृहत्पञ्चमूले । तद्यथा । बिल्वोग्निमन्थः श्योनाकः काश्मर्यः पाटलातथा । सर्वैस्तुमिलितैरेतैः स्यान्महापञ्चमूलकम् ॥

महापञ्चविषम् । न॰ बृहद्विषपञ्चके ॥ तद्यथा । शृङ्गीककालकूटश्चमुस्तकोवत्सनाभकः । शङ्खकर्णीतियोगोयंमहापञ्चविषाभिधः ॥

महापञ्चाङ्गुलः । पुं॰ स्थूलैरण्डे ।

महापत्रः । पुं॰ शाकवृक्षे ॥ मानके । मानकच्च॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ कन्दे ॥ त्रि॰ बृहत्पत्रयुक्ते ॥ महान्तिपत्राणियस्यसः ॥

महापत्रा । स्त्री॰ महाजम्ब्वाम् ॥

महापथः । पुं॰ प्रधानेऽध्वनि । घण्टापथे । राजवर्त्मनि ॥ आकाशे ॥ विस्तीर्णेपथि ॥ श्मशाने ॥ महतांपन्थाः॰ ष॰ ॥

महापथगमः । पुं॰ मरणे ॥

महापद्मः । पुं॰ अष्टनागान्तर्गतनागविशेषे । अतिशुक्ले । दशबिन्दुकमस्तके ॥ कुबेरस्यनवनिध्यन्तर्गतनिधिविशेषे ॥ लक्षकोटिसङ्ख्यायाम् । १०००००००००००० । न॰ सितपद्मे ॥

महापातकम् । न॰ ब्रह्महत्यादिषु ॥

यथा । ब्रह्महत्यासुरापानंस्तेयंगुर्व्वङ्गनागम: । महान्तिपातकान्याहु स्संसर्गश्चापितै: सह ॥ महापातकजं चिह्नं सप्तजन्मसुजायते । बाधतेव्याधिरूपेणतस्यकृच्छ्रादिभि: श्म: ॥ महत्त्वतत्पातकस्य ॥

महापातकी । स्त्री० ब्रह्महत्याद्यन्यतमपातकग्रस्ते ॥वीरहननाद्यन्यतममहापातकग्रस्ते॥ यथा । वीरघातीह्यथापायीवीराणांस्त्रीगमस्तथा । स्तेयीमहापातकिनस्तत्संसर्गीचपञ्चम: ॥ सचपतित: ॥ यथा । महापातकिनोयेचपतितास्ते प्रकीर्त्तिता: । पतितानांनदाह: स्यान्नान्त्येष्टिर्नास्थिसञ्चय: । नचाश्रुपात: पिण्डोवाकार्य्यं श्राद्धादिकं क्वचित् ॥ एतानिपतितानान्तुय: करोतिविमोहित: । तप्तकृच्छ्रद्वयेनैवतस्यशुद्धिर्नचान्यथा ॥ इतिशुद्धितत्त्वधृतंविष्णुपुराणवचनम् ॥ महापातकिनोजीवतएवप्रेतस्योदकक्रियावच्चमावरोच्यासपिण्डै: समानोदकैश्चयामादहिर्गत्वाज्ञात्यृत्विग्गुरुसन्निधानेरिक्तायांनवम्यांतिथौदिनान्तेकर्त्तव्येत्याहमनु: ॥ पतितस्योदकंकार्य्यंसपिण्डैर्बान्धवैर्बहि: । निन्दितेहनिसायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ ॥ दासीघटमपांपूर्णंपर्य्यस्येत्प्रेतवत्पदा ॥ अहोरात्रमुपासीरन्नशौचं बान्धवै: सह ॥ निवर्त्तेरंश्चतस्मात्तु सम्भाषणसहासने । दायाद्यस्यप्रदानञ्चयात्राचैवहिलौकिकी ॥ ज्येष्ठताचनिवर्त्तेतज्येष्ठावाप्यञ्चयद्धनम् । ज्येष्ठांशंप्राप्नुयाच्चास्ययवीयान्गुणतोधिक: ॥ प्रायश्चित्ते तुचरितेपूर्णंकुम्भमपांनवम् । तेनैवसार्द्धं प्राप्स्येयु: स्नात्वापुण्ये जलाशये ॥ सत्वप्सुतंघटंप्रास्यप्रविश्यभवनंस्वकम् । सर्व्वाणिज्ञातिकार्य्याणियथापूर्व्वंसमाचरेत् ॥ एवमेवविधिंकुर्य्याद्योषित्सुपतितास्वपि । वस्त्रान्नपानंदेयन्तुवसेयुश्चगृहान्तिके ॥ महापातकमस्यस्याश्चिन्ता । इति: ॥ पारिभाषिकमहापातकीयथा ॥ कृतप्राणप्रतिष्ठाश्चनीचैर्यांप्रतिमांद्विजदुर्गांनप्रणमेद्यस्तुसमहापातकीस्मृत: ॥ अपिच । पितरंमातरंभार्य्यांगुरुपत्नींगुरुंपरम् । योनपुष्णातिकापट्यात्समहापातकीभवेब्र० वै० पु० ॥

महापापम् । न० महापातके ॥ अत्युत्कटपापे ॥

महापाप्मा । पुं० अत्युग्रे ॥ कामे ॥ महत: पापस्यहेतुत्वात् ॥

महापारेवतम् । न० बृहत्पारेवते । द्वीपखर्जूरे ॥

महापाश: । पुं० यमदूतविशेषे । ब्रह्मास्त्रे ।

महापालक : । पुं० वोर्मिनि । चेलु
की । वृहद्भिर्गुणैः ॥

महापिण्डीतक : । पुं० कृष्णवर्णे मद
नद्रुमे । बाराहे ॥

महापिण्डीतक : । पुं० वृक्षविशेषे
। श्वेतपिण्डीतके । शल्लकोषतरौ
। मरे । पिण्डीतरौ । पेंडिरा०
हू० भा० ॥

महापीठम् । न० एकपञ्चाशत्पीठे ॥

महापीलु : । पुं० वृहत्पीलुवृक्षे ।
महाफले । मधुपीलौ ॥

महापुराणम् । न० एकादशलक्षणयुक्ते
व्यासप्रणीतेऽष्टादशसङ्ख्यकपुरा
णविशेषे ॥ तल्लक्षणं यथा । सृष्टि
श्चापिविसृष्टिश्चस्थितिस्तेषाञ्चपाल
नम् । कर्मणांवासनावार्त्तामनूना
ञ्चक्रमेणच ॥ वर्णनं प्रलयानाञ्चमो
क्षस्यचनिरूपणम् । उत्कीर्त्तनं हरे
र्देवदेवानाञ्चपृथक् पृथक् ॥ दशा
धिकंलक्षणञ्चमहतांपरिकीर्त्तितम्
॥ इतिब्रह्मवैवर्त्ते कृष्णजन्मखण्डे
१३२ अध्याय : ॥

महापुरुष : । पुं० नारायणे ॥ श्रेष्ठ
नरे ॥ लक्षणं वाराह्या ६७ अ० ॥
ब्रह्मात्माभेदज्ञानिनि० जीवन्मुक्ते
॥ महांश्चासौपुरुषश्च । सन्महदिति
समास : । आन्ममहतद्भ्यात्वम् ॥

महापुरुषदन्ता । स्त्री० शतमूल्याम् ॥

महापुरुषदन्तिका । स्त्री० महाशता
वर्य्याम् ॥

महापुष्पा । स्त्री० अपराजितायाम् ॥

महापृष्ठ : । पुं० उष्ट्रे त्रि० वृहत्पृष्ठे ॥

महापौलस्त्य : । पुं० वैकुण्ठनाथा
नुचरे ॥

महाप्रकृति : । स्त्री० दुर्गायाम् ॥

महाप्रपञ्च : । पुं० स्थूलसूक्ष्मकारण
प्रपञ्चानांसमष्टौ ॥ यथाऽवान्तरव
नानांसमष्टिरेकं महद्वनम्० यथाऽवा
न्तरजलाशयानांसमष्टिरेकोमहान्
जलाशयोभवति० तद्वत्स्थूलसूक्ष्म
कारणशरीरप्रपञ्चानामपिसमष्टिरे
कोमहान्प्रपञ्चोभवतीति ॥

महाप्रभ : । त्रि० अतिशयदीप्तियु
क्ते ॥

महाप्रभाव : । त्रि० अतिशयतेज :
शक्तिविशिष्टे ॥

महाप्रभु : । पुं० जगन्नाथे ॥

महाप्रलय : । पुं० सर्वसंहारे । एक
कालिकसमस्तजन्यपदार्थनाशे ॥
महांश्चासौप्रलयश्च ॥ न्यायमते ज
न्यभावानधिकरणे कालोमहाप्रल
य : ० सचचरमध्वंसरूप : ॥

महाप्रसाद : । पुं० विष्णुनैवेद्यादौ
॥ यथा । पादोदकञ्चनिर्माल्यं नै
वेद्यञ्चविशेषत: । महाप्रसादइत्यु
क्त्वाग्राह्यं विष्णो : प्रयत्नत : ॥ ब्राह्मे
चब्रह्ममंवेणब्रह्मणेपिंतवस्तुनि । त
न्माहात्म्यं महानिर्वाणतन्त्रेसम्यङ्

निरूपितम् ॥

महाप्रस्थानम् । न० शास्त्रीयेदेहत्यागविशेषे ॥ महत्०आवृत्तिशून्यंप्रस्थानम्०सर्पवृश्चिकसिंहव्याघ्रादिविषमभूम्याद्यपरिहारेणगमनंयावच्छरीरपातंतन्महाप्रस्थानम्०मुच्यते ॥

महाप्राण : । पुं० द्रोणकाके ॥

महाप्रेत : । पुं० ब्रह्मादिषु ॥ यथा । ब्रह्माविष्णुश्चरुद्रश्चईश्वरश्चसदाशिवः । एतेपञ्चमहाप्रेताभूताधिपतयोमताः ॥ चत्वारोमञ्चचरणाःपञ्चमःप्रच्छदःपटः । सच्चित्प्रकाशरूपेणशिवेनाभिन्नविग्रहाः ॥ तत्रासनेसमासीनानिर्भरानन्दरूपिणीति ॥

महाफल : । पुं० मालूरे । विल्वे ॥ त्रि० उत्कृष्टफले ॥ न० वृहत्फले ॥

महाफला । स्त्री० इन्द्रवारुण्याम् ॥ राजजम्ब्वाम् ॥ तुम्ब्याम् ॥ महाकोशातक्याम् ॥ मधुवीजपुरे ॥

महाफेना । स्त्री० अब्धिफेने । हिण्डीरे ॥

महाबल : । पुं० वायौ ॥ बुद्धे ॥ न० सीसके ॥ त्रि० बलोत्कटे । बलीयसि ॥ महासामर्थ्ये ॥ महत्प्रकृष्टंबलमस्य ॥

महाबला । स्त्री० अतिबलायाम् । पीतपुष्प्याम् । पीतवाट्यालके ॥

महाबोधि : । पुं० बुद्धे ॥

महाब्राह्मण : । पुं० निन्दितब्राह्मणे । कव्या० अचारज० इ० भा० ॥

महाभद्रा । स्त्री० काश्मर्याम् ॥ गङ्गायाम् ॥

महाभट : । पुं० अतिशययोद्धरि ॥

महाभाग : । त्रि० अतिधन्ये ॥ दयाद्युत्कृष्टगुणयोगोमहाभागता० तद्विशिष्टे ॥ महान्भागोभाग्यमस्य ॥ महान् असाधारणोभागऐश्वर्यादिभगसमुदायोयस्यवा ॥

महाभागा । स्त्री० महालयतीर्थस्थायां देव्याम् ॥

महाभारतम् । न० व्यासप्रणीतेतिहासशास्त्रे ॥ तन्नामकारणं यथा । एकतश्चतुरोवेदाभारतञ्चैतदेकतः । पुराकिलसुरैः सर्वैः समेत्यतुलयाधृतम् ॥ चतुर्भ्यः सरहस्येभ्योवेदेभ्योह्यधिकंयदा । तदाप्रभृतिलोकेस्मिन्महाभारतमुच्यते ॥ महत्त्वाद्भारतत्वाच्चमहाभारतमुच्यते ॥

महाभाष्यम् । न० पातञ्जलिव्याकरणभाष्ये ॥

महाभिलाष : । त्रि० महेच्छे ॥ महानभिलाषोस्य ॥

महाभिष : । पुं० राजर्षिविशेषे । प्रातीपे । शन्तनौ ॥ यथा । महाभिषोनृपोस्मात् प्रतीपस्यसुतस्तदा । शन्तनुर्नामराजर्षिर्धर्मात्मासत्यसङ्गरइति ॥

महाभीता। स्त्री० लज्जालुवृक्षे ॥ त्रि० अतिशयभययुक्ते ॥
महाभीम:। पुं० शान्तनुनृपे ॥ भृङ्गिनामकशिवद्वारपाले ॥ त्रि० अतिशयभयानके ॥
महाभीरु:। पुं० कीटविशेषे। गोपालिक० इ० गौ० दे० भा० प्र० ॥ ग्वाली० इ० दे० भा० ॥ अतिशयभयशीले ॥
महाभीष्म:। पुं० शान्तनुनृपे ॥
महाभूतम्। न० व्योमादिपञ्चसु। भूम्यादिपञ्चसु ॥ महाभूतानिपंचैव खानिलाग्न्यम्बुभूमय: ॥
महाभृङ्ग:। पुं० नीलभृङ्गराजे ॥
महाभैरव:। पुं० शरभरूपिणिहरे ॥
महाभोग:। त्रि० नारायणे ॥ अतिसुखिनि ॥ महान्भोग: सुखरूपोऽस्य ॥
महाभोगा। स्त्री० दुर्गायाम्। महार्थसाधिनीदेवीमहाभोगातत: स्मृता॥
महामण्डूक:। पुं० पीतमण्डूके ॥
महामति:। त्रि० अतिशयबुद्धिविशिष्टे ॥
महामद:। पुं० मत्तगजे ॥ त्रि० अतिशयहर्षयुक्ते ॥
महामना:। त्रि० सदन्त:करणे ॥ उत्कृष्टे। महेच्छे। उदारे। महाशये। अक्षुद्रचित्ते ॥ सर्वश्रेष्ठोहमितिमन्यमाने ॥ महद्भिर्धीरमन्यैरसममात्मानंमन्यमानंमनोयस्य स: ॥ परमेश्वरे ॥ सृष्टिस्थित्यन्तकर्माणिजगतांमनसैवकरोतीतिमहामना: ॥ मनसैवजगत्सृष्टिंसंहारञ्चकरोतिय इतिविष्णुपुराणम्। मनसैव० सङ्कल्पमात्रेणैव ॥
महामाघ:। पुं० योगविशेषे ॥ माघीचमघसंयुक्तामघायांचगुरुर्यदा। महामाघस्तदाप्रोक्तोव्रतोद्वाहादिवर्जयेत् ॥
महामात्र:। पुं० प्रधाने। अमात्ये। सामान्यादौ ॥ समृद्धे। हस्तिपकाधिपे। हस्तिशिक्षाजीविनि ॥ महतीमात्रापरिच्छेदोऽस्य ॥
महामात्री। स्त्री० आचार्यपत्न्याम् ॥ महामात्रयोषायाम् ॥
महामानसी। स्त्री० जिनानांविद्यादेवीभेदे ॥
महामाय:। पुं० हरौ ॥ मायाविनामपिमायाकारित्वात् ॥ महतीप्रकृष्टामायास्य। महामायात्वंचमायाविनामपिमयशम्बरप्रभृतीनांविविधप्रपंचविभ्रमकारिमायाप्रयोक्तृत्वात् ॥
महामाया। स्त्री० दुर्गायाम् ॥ ईश्वरशक्त्याम् ॥ विसदृशप्रतीतिसाधनंमाया० तस्यामहत्त्वंसर्वविषयत्वमितिव्याख्यानात् ॥ तस्या: स्वरूपंयथा। कालिकापुराणे। गर्भान्तर्ज्ञानसम्पन्नंप्रेरितंसूतिमारुतै:

।उत्पन्नंज्ञानरहितंकुरुतेयानिरञ्ज
नम्॥पूर्वापूर्वसम्बन्धसंस्कारैर्वि-
नियोज्यच।आहारादौततोमोहं-
ममत्वंज्ञानसंशयम्॥क्रोधोपरोध
लोभेषुक्षिप्त्वाक्षिप्त्वापुनः पुनः।प-
श्चात्कामेनसंयोज्यचिन्तायुक्तमहर्नि
शम्॥आमोदयुक्तंव्यसनासक्तंज-
न्तुंकरोतिया।महामायेतिसाप्रो
क्तातेनसाजगदीश्वरी॥इति॥
महामायी।पुं० ईश्वरे॥
महामायी।स्त्री० दुर्गायाम्॥
महामारी।स्त्री० महाकाल्याम्॥भा
मयैंशभूतायांमहाजनक्षयकर्यांदेव
तायाम्।संहारशक्तौ॥महतीमा
रयतीतितथा।महतीचासौमारी
चेतिवा॥व्याप्तंतयैतत्सकलंब्रह्मा
ण्डंमनुजेश्वर।महाकाल्यामहा-
कालेमहामारीस्वरूपया॥सैवका-
लेमहामारीसैवसृष्टिर्भवत्यजा॥स्थि
तिंकरोतिभूतानांसैवकालेसनातनी-
तिमार्कण्डेयपुराणम्॥अतिशय-
मारके॥
महामार्गः।पुं० राजमार्गे॥
महामालिनी।स्त्री० नाराचाभिधछ-
न्दोविशेषे॥यदिहनयुगलंततोविरे
फैर्महामालिनीतिलक्षणम्॥
महामाषः।पुं० राजमाषे।चौरा०
लोबिया० इ० भा०॥
महामुखः।पुं० कुम्भीरे।न० बृह
न्मुखे॥त्रि० तद्वति॥
महामुण्डी।स्त्री० महाश्रावणिका-
याम्॥
महामुनिः।पुं० नारायणे॥अग-
स्त्ये॥बुद्धे॥काले॥कृपाचार्ये॥
व्यासे॥महांश्चासौमुनिश्च।सन्म
हदितिसमासः।आन्महतइत्या
त्वम्॥ब्रह्मविदि॥तुम्बुरुवृक्षे॥
न० कुस्तुम्बुरुणि।धन्याके॥
महामूर्द्धा पुं० शिवे॥त्रि० बृहन्मस्त
कयुक्ते॥
महामूलः।पुं० राजपलाण्डौ॥कि
लिहिण्टे॥
महामूल्यः।पुं० पद्मरागे॥न० म
हार्घे॥त्रि० तद्वति॥
महामूषिकः।पुं० बृहदुन्दुरौ।महा
खे॥
महामृगः।पुं० हस्तिनि॥शरभे॥
महामृत्युञ्जयः।पुं० मृत्योर्जयका
रे शिवमन्त्रविशेषे॥नित्यमष्टशतं
जप्त्वामृत्युंमृत्युपथंनयेत्॥
महामेघः।पुं० अतिशयमेघे॥
महामेदः।पुं० अष्टवर्गाङ्गौषधे।
पुरोद्भवे।बृहन्मेदे॥
महामेदा।स्त्री० अष्टवर्गाङ्गौषधविशे
षे।वसुच्छिद्रायाम्।जीवन्याम्
पांशुरागिण्याम्॥महामेदाभिधः
कन्दोमोरङ्गादौप्रजायते।शुक्लार्द्र
कनिभःकन्दोलताजातःसुपाण्डुरः

ल्युट्। रजकरजनरञ्जनरञ्जस्य प सङ्ख्यानान्नलोपः॥ वक्ते : क्यन् वा ।। महच्चतद्रजनं च। सन्महदिति समास : ।

महारण्यम्। न॰ अरण्यान्याम् ॥ महच्चतदरण्यञ्च। सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैरितिसमासः। आन्महतइत्यात्वम् ॥

महारत्नम्। न॰ मुक्तादिनवसु ॥ मुक्ताफलंहीरकञ्चवैदूर्यंपद्मरागकम्। पुष्परागञ्चगोमेदंनीलंगारुत्मतंतथा ॥ प्रवालयुक्तान्युक्तानिमहारत्नानिवैनव ॥

महारथ : । पुं॰ रथिकविशेषे । अयुतधन्विभिः सहयोद्धरि ॥ यथा । एकोदशसहस्राणियोधयेद्यस्तुधन्विनाम्। शस्त्रशास्त्रप्रवीणश्चमहारथइतिस्मृतः ॥ अपिच । आत्मानं सारथिञ्चाश्वान् रक्षन् युद्ध्येत योनरः । समहारथसंज्ञः स्यादित्याहुर्नीतिकोविदाः ॥ शिवे ॥ विष्णौ ॥ महान् महात्मा॰नन्दी॰गरुडोवारथोयस्य स : ॥

महारम्भम्। न॰ गडलवणे । सांभर॰हू॰भा॰ ॥

महारस : । पुं॰ खर्जूरे ॥ कोशकारे । इक्षुविशेषे । कोसियार॰हू॰भा॰ ॥ कशेरुणि ॥ पारदे । रसेन्द्रे ॥ न॰काञ्जिके ॥

महारसाष्टकम्। न॰ हिङ्गुलादाष्टसु ॥ यथा । दरदंपारदः सत्त्वं क्रान्तंकान्तमभ्रकम्। माक्षिकं विमलश्चेतिस्युरेतेऽष्टौमहारसाः ॥

महाराज : । पुं॰ बुद्धभेदे । मञ्जुघोषे ॥ असपत्नराज्यप्रति । नृपश्रेष्ठे ॥

महाराजचूत : । पुं॰ उत्तमाम्रे । मन्मथानन्दे ॥

महाराजद्रुम : । पुं॰ आरग्वधे

महाराजिक : । पुं॰ गणदेवताविशेषे ॥ सत्यसुधन्वसवनादयोविंशत्यधिकशतद्वयसङ्ख्यातागौरवाक्षदर्शिताः । महाराजिकनामानोद्विशतेविंशतिस्तथा ॥ महतीराजिः पङ्क्तिर्येषामितिविग्रहेशैवादिभाषेतिकन्॥

महारात्रि : । स्त्री॰ महाष्टम्याम् ॥ अर्द्धरात्रात्परं मुहूर्त्तद्वये ॥ ब्रह्मलयोपलक्षितायांमहाप्रलयरात्र्याम् ॥ ब्रह्मणस्तुनिपातेचमहाकल्पोभवेन्नृप। प्रकीर्त्तितामहारात्रिः साएवचपुरातनैरितित्र॰वै॰पु॰ ॥

महाराष्ट्र : । पुं॰ देशविशेषे ॥ श्रिपर्वकंसमारभ्यमध्येचोज्जयिनीशिवे। मार्जारतीर्थेराजेन्द्रकोलापुरनिवासिनी ॥ तावद्देशोमहाराष्ट्रः कर्णाटस्वामिगोचरः । द्रु॰शक्तिसङ्गमे ७ पटलः ॥ अपिच। नैऋ॑ते

विडानन्तं महाराष्ट्रास्वरैश्च : । ज-
वन : मह्लव : सिन्धु : पारसीकाद
योमता : । इ० ज्योतिषतत्त्वे कूर्-
मचक्रं ॥

महाराष्ट्री । स्त्री० जलपिप्पल्याम् ॥
शाकविशेषे । करैठी० इ० भा० ।
भाषाप्रभेदे ।

महारिष्ट : । पुं० महानिम्बे । गिरि
निम्बे ।

महारुद्र : । पुं० महादेवे ।

महारूप : । पुं० शिवे

महारूपकम् । न० नाटके ॥

महारोग : । पुं० पापरोगे ॥ तथाष्ट
विधोयथा । उन्माद : १ । त्व-
ग्दोष: २ । राजयक्ष्मा ३ । श्वास:
४ । मधुमेह : ५ । भगन्दर : ६ ।
उदर : ७ । अश्मरी ८ । इति ॥

महारोगी । त्रि० महारोगयुक्ते ॥

महारौरव : । पुं० नरकान्तरे ॥ महा
रौरवसंज्ञन्तु अधोर्द्धं तास्रसम्पुटम् ।
धम्यते खदिराङ्गारैर्युं वहारापनाय
क : ॥ देवद्रव्यापहारी च पच्यते का
लमक्षयम् ॥ महान्रौद्रोरवोऽत्र ।
अकम्मादित्वाद्वलोप : । यद्वा ।
रुरुभांरमृगाख्योमृग : । महतोरु
रोरयम् । अण् ॥

महार्घ : । पुं० लावकाख्यखगे ॥ त्रि०
महामूल्ये ॥

महार्णव : । पुं० महासमुद्रे ॥

महार्थ : । पुं० परमार्थे ॥

महार्द्र : । पुं० वृक्षविशेषे । महाला
इ० गौ० दे० भा० ॥

महार्द्रन् । न० चन्दने ॥

महार्द्रकम् । न० वनार्द्रके ॥

महार्बुदम् । न० दशार्बुदे । शतकोटि
१००००००००० सङ्ख्यायाम् ।
शब्दे ॥

महार्ह : । पुं० विष्णौ । मह : पूजा-
तामर्हति । अर्हइतिसूत्रात् महर्त्वे :
कर्मण्युपपदेअच्प्रत्यय : ॥ न०
श्वेतचन्दने ॥

महालक्ष्मी : । नारायणशक्त्याम् । रा
धायाम् ॥ यन्मायया मोहिताश्च ब्र
ह्मविष्णुशिवादय : । वेधानासां
महालक्ष्मीं परां राधां वदन्तिते ॥ यद
र्द्धाङ्गा महालक्ष्मी : प्रियानारायण
स्य चेति ब्र० वै० पुराणम् ॥

महालय : । पुं० विहारे ॥ तीर्थमहा
भागादेव्याश्चैव ॥ परमात्मनि ॥
पितॄणामुत्सवाश्रयेकन्यागतापरपक्षे
कन्यागत० इ० भा० ॥

महालसा । स्त्री० देवीविशेषे । दक्षि
णदेशे० महादिस्थानमितिविख्या-
ते० देवीस्थाने ॥

महालिकटभी । स्त्री० श्वेतखिर्णकी
वृक्षे ॥

महालीलसरस्वती । स्त्री० तारादेव्या :
प्रभेदे ॥ लीलयावाक्प्रदायितितिव

कालिपलीनगमिष्यामीति । एवं गुर्वादिप्रयोजनमन्तरे धनपरिग्रही ष्यामीति॰यथायोग्यमवच्छेदोद्रष्ट व्य :। एतादृगवच्छेदोपरिहारे च यदासर्वं जातिसर्वं देश सर्व्वं काल सर्वं प्रयोजनेषुभवा : सार्वभौमा अहिंसाद्योभवन्तिमहताप्रयत्नेन परिपाल्यमानत्वात्॰तदातेमहाव्र तशब्देनोच्यंते । एवंकाष्ठमौना दिव्रतमपिद्रष्टव्यम् । एतादृशव्रत दार्ढ्येच॰कामक्रोधलोभमोहानांच तुर्णामपिनरकद्वारभूतानांनिवृत्ति:। तत्राहिंसमयाक्षमयाचक्रोधस्य॰ब्रह्म चर्येणवस्तुविचारेणचकामस्य॰च स्तेयापरिग्रहरूपेणसन्तोषेणलोभ स्यसत्येनयथार्थज्ञानरूपेणविवेके नमोहस्य॰तन्मूलानाञ्चसर्वेषांनिवृ त्तिरितिद्रष्टव्यम् । इतराणिचफला निसकामानांयोगशास्त्रे कथितानि॥

महाव्रती । पुं॰ शिवे ॥ उत्कटे ॥ त्रि॰महाव्रतयुक्ते ॥

महाशक्ति :। पुं॰ कार्तिकेये ॥ हा- रौ ॥ महतीशक्ति :सामर्थ्यमस्य॥ अतिशयपराक्रमे ॥ स्त्री॰मायामव- चनहारूपिण्याम् । निर्गुणायाम् ॥ त्रि॰ तद्युक्ते ॥

महाशङ्ख : पुं॰ नरास्थनि । कर्णं नेत्रयोर्मध्यगतास्थि ॥ कर्णनेत्रान्त- रालास्थि महाशङ्ख : प्रकीर्त्ति-त : ॥ दशनिखर्वे १००००००००००००० निधिप्रभे दे ॥ चलिके । ललाटे ॥ बृहच्छङ्खे ॥ यात्रायोगान्तरे ॥ यथा । स्त्री स्वस्थे लाभगेशुक्रे त्रिषष्ठे देवपूजिते । महाशङ्खाख्ययोयोग : प्रतिप- द्यापमानद : ॥

महाशठ :। पुं॰ राजधत्तूरे ॥ त्रि॰ अ तिधूर्त्ते ॥

महाशणपुष्पिका । स्त्री॰ वृहच्छणपु- ष्प्याम् । वृत्तपर्ण्याम् । श्वेतपुष्पा याम् ॥

महाशता । स्त्री॰ महाशतावर्याम् ॥

महाशतावरी । स्त्री॰ सहस्रवीर्यादा- म् । सुरसायाम् । शतवीर्यायाम् ॥ महाशतावरीमेध्याहृद्यावृष्यारसाय नी । शीतवीर्यानिहन्त्यर्शोग्रहणी- नयनामयान् ॥

महाशन :। पुं॰ विष्णौ ॥ कल्पा- न्ते सर्वंग्रसनात्महत्भशनंसंहार्य्यं- मस्य । महाभैरवे ॥ कामे ॥ मह- द्भनंविषयजातं यस्य :॥ घ्नासु- सुरे ॥ त्रि॰ अतिभक्षकेरीसि ।

महाशफर :। पुं॰ फफसाख्यमत्स्ये ॥ महाशफरसंज्ञस्तुतिक्त : पित्तकफा पह :। शिशिरोमधुरोरुच्योवात- साधारण : स्मृत : ॥

महाशय :। त्रि॰ महेच्छे ॥ महाम् आशयोयस्य ॥ पुं॰समुद्रे ॥

महाशय्या । स्त्री० राजतल्पे । हस्त्यव्यायाम् ॥
महाशर : । पुं० स्थूलशरे ॥
महाशल्क : । पुं० चिङ्गटमत्स्ये ॥
महाशाक : पुं० शाकभेदे ॥
महाशोखा । स्त्री० नागवल्लयाम् ॥
महाशाल : । पुं० महाशस्थे । विस्तीर्णाभि : शालाभिर्युक्ते । सम्पन्ने ॥ महतीविस्तीर्णाशाला० रहरथस्य :॥
महाशालि : । पुं० स्थूलशालौ । सुगन्धिके ॥ महान्श्रेष्ठ : शालि: ॥
महाशिव : । पुं० महादेवे ॥
महाशीता । स्त्री० शतमूल्याम् ॥
महाशुक्ति : । पुं० मुक्तामातरि ॥
महाशुक्ला । स्त्री० सरस्वत्याम् ॥ त्रि० अतिशुक्लवर्णयुक्ते ॥
महाशुभ्र : । त्रि० अतिशुभ्रवर्णयुक्ते ॥ न० रजते ॥
महाशूद्र : पुं० आभीरे ॥
महाशूद्रा । स्त्री० महत्यांशूद्रायाम् ॥ महतीशूद्रेतिविग्रह :॥
महाशूद्री । स्त्री० आभीर्याम् ॥ महाशूद्रस्यस्त्री० जातौ वा । पुं०योगादिति० जातेरितिवाङीष् ॥
महाशैवडी । स्त्री० श्वेतकिङ्किणीवृक्षे ॥
महाशौषिर : । पुं० दंतरोगविशेषे ॥ दन्ताश्चलन्तिवेष्टभ्यस्तालुचाप्यवदीर्यते । दन्तमांसानिपच्यन्तेमुखञ्चतुद्यते ॥ यस्मिन्ससर्वजोव्याधिर्महाशौषिरसंज्ञित : ॥
महाश्मशानम् । न० आनन्दवने । काश्याम् ॥ महांत्यपिचभूतानिप्रलये समुपस्थिते । शेरतेऽत्रशवाभूत्वाश्मशानन्तुततोभवेत् ॥ वाराणसीति विख्याताद्द्रावासइतिद्विज : । महाश्मशानमित्युक्तंप्रोक्तमानन्दकाननम् ॥
महाश्यामा । स्त्री० शिंशपावृक्षे ॥ श्यामलतायाम् ॥
महाश्रम : । पुं० तीर्थविशेषे ॥
महाश्रमण : । पुं० बुद्धभेदे । गौतमसुनौ ॥
महाश्रावणिका । स्त्री० कदम्बपुष्प्याम् । महामुण्डाम् ॥
महाश्री : । स्त्री० बुद्धशक्त्यन्तरे । तारायाम् ॥
महाश्रोत्रिय : । पुं० महत्त्वेसतिश्रुताऽध्ययनवृत्तसम्पन्ने ॥ महांश्चासौश्रोत्रियश्च ॥
महाश्वेता । स्त्री० शुक्लभूकूष्माण्डे । श्वेतगन्धिकायाम् ॥ (भूमिकूष्माण्डे ॥ सरस्वत्याम् ॥ श्वेतापराजितायाम् ॥ सितायाम् ॥ मधुजायाम् । श्वेतकिङ्किणीवृक्षे । दुर्गायाम् ॥ महतीचासौश्वेताच ॥
महाषष्ठी । स्त्री० दुर्गायाम् ॥
महाष्टमी । स्त्री० आश्विनशुक्लाष्टम्याम्

॥ शरत्कालेऽश्वयायातुसैवप्रोक्ताम हाष्टमी। महारात्रिरितिख्यातातस्या मप्यांयजेत्सुधीः॥ अष्टम्यांरुधिरै र्मांसैर्महामांसैः सुगंधिभिः। पू जयेद्बहुजातीयैर्बलिभिर्भोजनैःशि वाम्। सिन्दूरैः पट्टवासोभिर्नाना विधविलेपनैः। पुष्पैरनेकजातीयैः फलैर्बहुविधैरपि॥ उपवासंमहाष्टम्यां पुत्रवान्नसमाचरेत्। यथातथैवपूता त्मात्रतीदेवींप्रपूजयेत्॥ पूजयि त्वामहाष्टम्यांनवम्यांबलिभिस्तथा। विसर्ज्जयेद्दशम्यान्तुश्रवणेतांवरी त्सवैः तत्राईरामपूजा यथा। कन्यार्कंस्थेरवौविप्रे शुक्लाष्टम्यांप्रपू जयेत्। सोपवासोनिशार्द्धेतुमहा विभवविस्तरैः॥ पूजांसमारभे द्व्यानन्वर्चे वारुणे पिबा। यशुघा तस्वकर्त्तव्योगवलाजवधस्तथे तिदे वीपुराणेवारुणपदेनपूर्वाषाढोच्यत इतिरघुनन्दनः॥ महाष्टम्युपवा सेपारणन्तु। अष्टम्यांसमुपोष्यैव नवम्यामपरेऽहनि। मत्स्यमांसो पहारैणदद्यान्नैवेद्यमुत्तमम्॥ ते नैवविधिनान्नन्तुस्वयंभुञ्जीतनान्य थेति॥

महासन्न:। पुं० कुबेरे॥ त्रि०अति-निकटे॥

महासमङ्गा। स्त्री० हबवलायाम्। खिरहिट्याम्। बलायाम्। कगहि या०कंघी०खरेटी०इ०भा०॥

महासर्ज्जः। पुं० असनवृक्षे॥ प-नसे॥

महासहः। पुं० कुब्जकवृक्षे॥ त्रि० अतिसहने॥

महासहा। स्त्री० माषपर्ण्याम्। अम्ला ने। कठसरैय्या०इ०भा०॥ मह तीचासौसहाच। सन्महदितिसमा सः। आन्महतइत्यात्वम्॥

महासान्तपनम्। न० व्रतविशेषे॥ अचयाज्ञवल्क्यः। कुशोदकञ्चगो क्षीरंदधिमूत्रंशकृत्घृतम्। ज ग्ध्वापरेह्ण्युपवसेत्कृच्छ्रंसान्त पनंचरम्॥ त्र्यहसाध्यसान्तपनमु क्त्वाह। पृथक्सान्तपनद्रव्यैःषड हः सोपवासकः। सप्ताहेनैवकृ च्छ्रोयंमहासान्तपनंस्मृतम्॥ म-हासान्तपनंधेनुषट्कदानसम म्॥

महासारः। पुं० दुर्खदिरे॥ त्रि० युक्तियुक्ते॥

महासाहसम्। न० अतिबलात्कारकृत कार्ये॥ अतिभयदण्डे॥

महासाहसिकः। त्रि० अतिसाहसयु क्ते॥ प्रसह्यापहारिणि॥ महांश्चा-सौसाहसिकश्च॥

महासिंहः। पुं० शरभे। पर्वताश्रये॥ देव्याःसिंहे॥ यथा। तीक्ष्णदंष्ट्रः करालास्यः सटाशोभितकन्धरः।

अतुरङ्गिभिर्यक्तक्षोभवर्जितः । प्र-
कीर्त्तितश्रुति ॥

महासुख : । पुं० बुद्धे ॥ न० क्रीडा वले । प्रचुरसुखे ॥ वि० तद्वति ॥

महासुगन्धा । स्त्री० गन्धनाकुल्याम् ॥ वि० अतिसुगन्धयुक्ते ॥

महासूक्ष्मा । स्त्री० वालुकायाम् ॥ वि० अतिशयसूक्ष्मे ॥

महासेन : । पुं० कार्त्तिकेये ॥ महासैन्यपतौ ॥ बौद्धभेदे ॥ महतीसेनाऽस्य ॥

महास्कन्ध : । पुं० शरभे ॥ वि० बृहत्स्कन्धयुक्ते ॥

महास्कन्धा । स्त्री० जम्बूवृक्षे ॥

महास्कन्धी । पुं० शरभे ॥

महास्थली । स्त्री० पृथिव्याम् ॥ श्रेष्ठस्थाने ॥

महास्नायु : । पुं० कण्डरायाम् ॥

महास्रग्वी । पुं० शिवे ॥

महास्वन : । पुं० वाद्यप्रभेदे । महत्तूर्ये ॥ शिवे ॥ महान्‌जर्ज्जित : स्वन : नादोऽस्य । यद्वा । महान् स्वन : श्रुतिलक्षणोनादोऽस्य ॥ सन्महदितिसमासे०आत्वम् ॥ उच्चशब्दे ॥ वि० तद्वति ॥

महाहनु : । पुं० शिवे ॥ हनूमति ॥ वि० वृहद्धनुयुक्ते ॥

महाहवि : । न० गोघृते ॥ ब्रह्मणि ॥ महच्चतद्धविश्च०ब्रह्मात्मनिसर्वंजगत्तदात्मतयाहूयतेहुतिमहाहवि : । [illegible]पुरोडाश[illegible] [illegible] [illegible] शाहवि : ॥

महाहास : । पुं० अट्टहासे ॥

महाहिगन्धा । स्त्री० गन्धनाकुल्याम् ॥

महाह्रस्वा । स्त्री० कपिकच्छ्वाम् । शूकशिम्ब्याम् ॥ वि० अतिखर्वे ॥

महि । अ० महिमनि ॥

महि : । स्त्री० भूमौ ॥ महति । मह पूजायाम् । चुरादिरदन्त : । सर्वधातुभ्यइ : ॥

महिका । स्त्री० हिमे ॥ महति । मह० । क्वुन्शिल्पिसंज्ञयो : ॥

महित : । वि० पूजिते ॥ महतिस्म ॥ मह० । मतिबुद्धिपूजार्थेभ्यश्चेति क्त : ॥

महितम् । न० राज्ये ॥ वि० पूजनीये ॥ महति । मह० । महेरिनण्चेति पचिवूनन् ॥

महिमा । पुं० शिवैश्वर्ये । ऐश्वर्यातिशये । भूतिप्रभेदे ॥ महान्भवति० येनसमस्तब्रह्माण्डेपिनसमवैति ॥ विभूतिविस्तारे ॥ आत्मन : कर्मनिमित्तवृद्धिक्षयराहित्ये ॥ महतो भाव : । पृथ्वादिभ्यइमनिच् ॥ उत्कर्षे ॥

महिमभृत् । वि० ऐश्वर्यवति ॥

महिर : । पुं० पीथे । मिहिरे । सूर्ये ॥

| संस्कृतम् | भाषा |
|---|---|

स्वविज्ञयालाहवाम्बया :
मातृभोगीण : । त्रि० मातुर्हितं ॥ मा
तुर्भोग : शरीरम् । तस्मै हित : ।
आत्मविश्वजनेत्यादिनाख : ॥
मातृमुख : । त्रि० जडे ॥ इतिपिका
खड्गशेष : ॥
मातृयोग : । पुं० यात्रायोगोऽन्तरे ॥
यथा । अधिमात्रांशगेसौम्योसितेवा
प्यसुरार्चिते । लग्नगेमातृयोगोयंश
भूपांसन्निद्धास्तदा ॥
मातृवाहिनी । स्त्री० वल्गुलायाम् ।
मांसिष्टायाम् । पक्षिविशेषे ॥
मातृशासित : । पुं० मूर्खे ॥
मातृष्वसा । स्त्री० मातुर्भगिन्याम् ॥
मातु : स्वसा । मातृपितृभ्यांस्वसि
तिषत्वं ॥
मातृष्वसेय: । पुं० मातृष्वसृसुते । मा
तृष्वसीये ॥ मातृष्वसुरपत्यम् । ढ-
किलोप: । अतएवज्ञापकाड्ढक् ॥
मातृष्वसेयी । स्त्री० मातुर्भगिनीसु
तायाम् ॥ ङीप् ॥
मातृष्वस्रीय: । पुं० मातृष्वसृसुते ॥ मातृ
ष्वसुरपत्यम् । मातृष्वसुश्चेतिछण् ॥
मातृष्वस्रीया । स्त्री० मातुर्भगिन्या :
कन्यायाम् ॥ टाप् ॥
मातृसिंही । स्त्री० वासके ॥
मात्रम् । न० कार्त्स्न्ये ॥ यथा ।
जीवमात्रं नहिंसेत ॥ अवधारणे ॥
यथा । पयोमात्रं भुङ्क्ते ॥ मीयते०

अनयावा । मति० मिमीतेवा ।
माशानि । माङ् मानेवा । हुयामा
शुभसिभ्यस्त्रन् ॥ स्वार्थे ॥
मात्रा । स्त्री० कर्णभूषणे ॥ वित्ते ।
द्रव्ये ॥ मानि ॥ इयत्ताख्यादीपरिच्छे
दे ॥ अक्षरावयवे ॥ स्वल्पे ॥ का
ले । अकारादिलघ्वक्षरकाले ॥ वृ
त्ते ॥ कालविशेषे ॥ यथा । कालेन
यावतापाणि : पर्येतिजानुमण्ड
लं । सामाण्णाकविभि : प्रोक्ताङ्ग
खरीवंग्रत्तेसता ॥ अपिच । वाम
जानुनितद्धस्तभ्रमणं यावताभवेत् ।
कालेनमात्रामाकृग्याहुर्विभिवेंदपा
रगै : ॥ पुनश्च । स्वजानुन : करा-
ग्रं कुर्याच्छोटिकयायुतम् । एषा-
मात्राभवेदेकासर्वत्रैवैषनिश्चय: ॥
यथाल्पे । विषयेषु ॥ मीयन्ते०
इ० मात्रा : विषया : ॥ उपभोग
योग्यविशेषे इन्द्रियंवृत्तिषु ॥ इ
न्द्रियेषु ॥ मीयतेऽनया० इतिमा
त्रा० परिच्छित्ति : ॥ मिमन्ते वि
षयाआभिरितिमात्रा: ० इन्द्रिय
वृत्तय: ॥ मीयते० अनयावा । मा
ति० मिमीतेवा । माशानि० माङ्
मानेवा । ष्ट्रन् । अनित्य : षित्वा
ङीष् । टाप् हुयामेतिसूत्रन् ॥
पञ्चलघ्वक्षरेकाले ॥ अंशे ॥ यथा ।
नयोषिद्भ्य : पृथगुद्याद्दवसानहि
नाहते । स्वभर्तृपिण्डमात्राभ्यस्तु

बोधकं मानमिति मानलक्षणम् । माना नांस्वविषयावभासकत्वं निरपेक्षमिति तार्किका: । आत्मसापेक्षमिति वैदिका: । मानाधीनामेयसिद्धिर्मानसिद्धिश्चलक्षणादिभ्याहु : ॥ प्रस्थादौ परिमाणे । चौतवे । द्रवये । याप्ये ॥ तत्तु तुलाङ्गुलिप्रस्थैस्त्रिविधं भवति । तत्र तुलायहस्तं गोञ्मानाद्युपलभ्यते । अङ्गुल्या हस्तादि । प्रस्थेमद्रोणादि ॥ ऊर्द्ध्वमानंकिलोन्मानंपरिमाणन्तु सर्वत: । आयामस्तुप्रमाणं स्यात्संख्या बाह्यातु सर्वत: ॥ मननम् । मनु-अवबोधने । घञ् ॥

मानक : । पुं० भ० कन्दप्रभेदे । महापत्रे । मानकचू० मानसागर० इू० भा० प्रसिद्धकन्दे ॥ मानक : शोथघ्न: शीत: पित्तरक्तहरोलघु : ॥

मानग्रन्थि : । पुं० अपराधे ॥

मानधन : । त्रि० अभिमानवति ॥

मानधानिका । स्त्री० कर्कट्याम् ॥

मानना । स्त्री० हनने । माने ॥ मनस्तम्भे चुरादि: । ततोयुच् । विबोलुक् ॥

माननीय : त्रि० मान्ये । पूजनीये ॥

मानफलम् । न० अज्ञातार्थप्रकाशने ॥

मानभाक् । त्रि० अभिमानवति ॥ मान्ये ॥ यथा तेषाम्तुसमवेतानांमान्यौस्नातकपार्थिवौ । राजस्नातकयोश्चैव स्नातकोनृपमानभागिति ॥

मानरन्ध्रा । स्त्री० ताम्ब्याम् । तांबी० इू० गौ० दे० भा० प्र० वाद्यविशेषे ॥ यथा । यस्मघोषोऽघतान्नौका मानरन्ध्राविकाविकेति० चिन्ताहङ्गेष : ॥

मानव : । पुं० मनुष्ये । मनुजे ॥ मनोरयम् । तस्येदमित्यण् ॥ यद्वा । मनोरपत्यम् । ब्राह्मणमाणवे तिज्ञापकादण् ॥ त्रि० मनुप्रोक्ते ॥ न० उपपुराणविशेषे ॥

मानवक : । पुं० बाले ॥

मानवर्जित : । त्रि० मानरहिते ॥ नीचे ॥

मानवान् । त्रि० सत्कारवति ॥ स्त्री पर्वति । मानोविद्यतेऽस्य । मतुप् ॥ स्त्री० उगितत्वान्ङीपि० मानवती ॥

मानवी । स्त्री० मनो: कन्यायाम् ॥ मानुष्याम् ॥ शासनदेवीविशेषे ॥ मनुप्रोक्तायाम् ॥ मनोरियम् । तस्येदमित्यण् । ङीप् ॥ विद्यादेवीविशेषे ॥

मानस : । पुं० जपविशेषे ॥ यज्जिह्वौष्ठं मनागपिन चलतिसमानस : विधियज्ञाज्जपयज्ञोविशिष्टोदशभिर्गुणै: । उपांशु : स्याच्छतगुण: साहस्रोमनस : स्मृतइतिमनूक्त : ॥

न० स्वान्ते । मनसि ॥ अस्यसुधा यथा । परापरत्वं सङ्ख्याद्याः प सवेगश्चमानसं । इति० भा० प० ॥ मानसतापोयथा । कामक्रोध भयद्वेषलोभमोहविषादजः । शो कासूयावमानेर्ष्यामात्सर्यादिभयस्त था ॥ मानसोपिद्विजश्रेष्ठतापोभ वतिनैकधा । इ०वि०पु० ॥ मा नसंत्रिविधं कर्म यथा । परद्रव्येष्व भिध्यानं मनसाऽनिष्टचिन्तनम् । वितथाभिनिवेशश्चत्रिविधं कर्ममा नसम् ॥ सरोविशेषे ॥ यथोत्तमा र्षे रामायणे । कैलासपर्वते राम मनसानिर्मितंपरम् । ब्रह्मणानरशा र्दूल तेनेदंमानसंसरः ॥ तस्मात् सुस्रावसरसः सायोध्यामुपगूहते । सरः प्रवृत्तासरयूः पुण्याब्रह्मस रश्च्युता ॥ इति ॥ कूर्मेन्द्रसंहिता यान्तु०मेरोर्याम्ये गन्धमादनोनाम विष्कम्भगिरिस्तस्यमूलेनन्दनाख्यमु पवनमस्ति०तत्रमानसंनामसरउक्त्यु क्तं यथा । यामाद्रिमूलेगन्धर्वसुरसि द्धाप्सरोवृतम् । नन्दनं मानसंतत्स रोमानसतस्करम् ॥ इति ॥ चि० मनोभवे ॥ यथा । विषयेष्वतिसं रागोमानसोमलउच्यते ॥ अनूढा नङ्गपीडैवममेयं मानसीव्यथा ॥ सङ्कल्पः अस्य मानसमिति ॥ न० गिरिविशेषे ॥ मन्यतेऽनेन । मन

स्वामी । असुनृ । तत्तः प्रज्ञाद्यण् ॥

मानसतीर्थम् । न० रागादिरहिते मनसि ॥ मनोनिर्मलतीर्थेषुरागा दिभिरनाविलमिति ॥

मानसपूजा । स्त्री० मनोरचितद्रव्यस्य रचाकस्यपर्यादाम् ॥

मानसयागः । पुं० यागेषुप्रथमे ॥ य- कृत्वामानसंयागंयोन्यं यागं समा- रभेत् । अपिच : सतुविप्रोयोनमो ध्यायविधीयते ॥ आत्मयागेकृतेचे- वदेवमुक्ति : प्रजायते ॥

मानसवासना । स्त्री० कामक्रोधदम्भ दर्पादासुरसम्पदि ॥ काम्यमानत्व इच्छाजन्यसंस्कारे ॥

मानसव्रतम् । न० अहिंसादौ ॥ यथा । अहिंसासत्यमस्तेयंब्रह्मचर्यमक ल्पता । एतानिमानसान्याहुर्व्रता- नितुधराधरे ॥ इ० वराहपुराण म् ॥

मानसालयः । पुं० हंसे ॥ मानस आलयोऽस्य ॥

मानसिकम् । न० मनः कल्पिते ॥

मानसी । स्त्री विद्यादेवीविशेषे ॥ म- नः कल्पितायाम् ॥

मानसूत्रम् । न० स्वर्णादिनिर्मितक टिसूत्रे ॥

मानसोत्तरः । पुं० मेरोः प्रकारवत् परितः स्थितेमहापर्वते ॥

मानसौकाः । पुं० हंसे॥ मानसंदर

थादूबहु॰भा॰ ॥

मालाधरः । पुं॰ वर्णवृत्तविशेषे ॥ द्विजवरगणान्वितोगजपतिः पुनस्तूर्यवान्॰करतलपरिस्फुरत्कमकुण्डलेनान्वितः । सुरपतिगुरुश्रियापरिगतः समंतात्सखे॰जयतिभुविवृत्तभूपतिरयन्तुमालाधरः ॥ यथा। क्वचिदपिवयस्यखासहविनोदलालसती॰ कतिपयकथारसैर्वअतिशारकैबालजम् । सुभगतब्कामिनीरससिरामव्यसायासिनी मनुमपतिभाविनी मदनवेदना सततः ॥

मालारिष्टा। स्त्री॰ पाठायाम्। मरकतपत्त्वाम् । हरितलतायाम् ॥

मालाशिका । स्त्री॰ पृक्कायाम् ॥

मालाली । स्त्री॰ पृक्कायाम् ॥

मालि: । पुं॰ सुकेशराक्षसपुत्रे ॥

मालिकः । पुं॰ मालाकारे ॥ पक्षिविशेषे ॥ मालाशिल्पमस्य। शिल्पमितिठक् ॥ मालास्यास्तिवा । व्रीह्यादिभ्यश्चेतिठन् ॥

मालिका । स्त्री॰ सप्तलायाम् ॥ पुत्र्याम् ।। ग्रीवालङ्करणे ॥ पुष्पमाल्ये ॥ नदीविशेषे ॥ सुरायाम् । मद्ये ॥ टाप् ॥

मालिकी । स्त्री॰ मालिकयोषिति । मालिन्॰ द्र॰ भा॰ ॥ टिड्ढेति ङीप् ॥

माली । पुं॰ मालावति॥ मालास्त्यस्य ।सुखादिषु॰मालाच्चेति॰ इतिपाठादिनिः ॥ व्रीह्यादित्वाद्वा॰ इनिः । सतुचपाद्न्यंचापि ॥ सुकेशराक्षसपुत्रे ॥

मालिनी । स्त्री॰ मालाकायाम् ॥ मालिकयोषिति ॥ गौर्याम् । उमायाम् ॥ चम्पानगर्याम् ॥ मन्दाकिन्याम् ॥ नदीविशेषे ॥ मालास्तिअस्याः अस्यांवा । व्रीह्यादित्वादिनिः । ङीप् ॥ यद्वा मलते। मलधारणे । णिनिः । ङीप् । अग्निशिखायाम् ॥ दुरालभायाम् ॥ अतिशक्वरीच्छन्दो १५ भेदे ॥ यथा । ननमयययुतेयं मालिनीभोगिलोकैः ॥ कृगमदकृतचर्चापीतकौशेयवासारुचिरशिखिशिखण्डाबद्धधम्मिल्लपाशा । अनृजुनिहितकंसैवंशमुत्क्वाणयन्तीधृतमधुरिपुलीलामालिनीपातुराधा ॥

मालिन्यम् । न॰ मलिनत्वे ॥

मालेयः । त्रि॰ मालायाम्भवे।। ढक्छः ॥

मालुः । स्त्री॰ पत्रलतायाम् । पत्रवल्ल्याम् ॥ नार्याम् ॥

मालुधानः । पुं मातुलाहौ। चित्रसर्पे ॥ मालुरोषधी॰तत्रधानमस्य ॥ महापद्मे ॥

मालुधानी । स्त्री॰ लतान्तरे ॥

मालूक : । पुं० कृष्णार्जके ॥
मालूर : । पुं० शाण्डिल्यवृक्षे । श्रीफले । बिल्वे । बेल० इ० भा० ॥ मांलक्ष्मींपरेषांलुनाति । लूञ्छेदने । बाहुलकाद्रक् ॥ कपित्थवृक्षे ॥
मालेया । स्त्री० स्थूलैलायाम् ॥
माल्यम् । न० कुसुमे । पुष्पे ॥ मालायांसाधुमाल्यंपुष्पमितिविवरणम् यथा । यथाचाल्येनमाल्येनवासितंतिलसर्षपम् । नमुञ्चतिस्वकंगन्धंतद्वत्सूक्ष्मस्यदर्शनम् ॥ पुष्पमालायाम् ॥ मूर्ध्निन्यस्तपुष्पदामनि ॥ केशकलापाद्बहिर्माल्यधारणनिषेधोयथा । नविगर्ह्यकथांकुर्याद्बहिर्माल्यंनधारयेत् । गवांचयानंपृष्ठेनसर्वथैवविगर्हितम् ॥ रत्नमयस्रजि ॥ मालामात्रे ॥ मल्यते । मल धारणे ऋहलोर्ण्यत् ॥ यद्वा । मालैव । चतुर्वर्णादित्वात्ष्यञ् ॥
माल्यपुष्प : । पुं० शणवृक्षे ॥
माल्यपुष्पिका । स्त्री० शणपुष्प्याम् ॥
माल्यवान् । पुं० पर्वतविशेषे । मेरुत : प्राच्यामानीलनिषधंयाम्योत्तरायतो द्विसहस्रयोजनविस्तीर्णःकेतुमालेलावृत्तवर्षयोर्मर्यादाद्रौ ॥ माल्याकारताऽस्यास्तिमतुप् ॥ राक्षसभेदे ॥

माल्ल : । पुं० लेटात्तीवरकन्यायामुत्पन्ने० सङ्करजातौ ॥
माल्लवी । स्त्री० मल्लयात्रायाम् ॥
माशब्दिक : । त्रि० प्रतिषेद्धरि । निषेधके ॥ माशब्द : इतियआहस: । तदाहेतिमाशब्दादिभ्यउपसङ्ख्यानमितिठक् ॥
माष : । पुं० व्रीहिप्रभेदे । कुरुविन्दे । धान्यवीरे । वृषाकरे । मांसले । बलाढ्ये । पित्र्ये । भोजने । मा इ० उडद० इ० भा० ॥ माषस्यफलंमाष : । अवयवेचप्राण्योषधिवृक्षेभ्यइत्यण् । तस्यफलपाकशुषामिति लुपि० युक्तवद्भाव : ॥ माषोगुरु : स्वादुपाक : स्निग्धोरुच्योऽनिलापह : । उष्ण : सन्तर्पणोबल्य : शुक्रलोर्ध्वहृत : पर : ॥ भिन्नमूत्रमलस्तन्यमेद : पित्तकफप्रद : । गुदकीलार्दितश्वासपक्तिशूलानि नाशयेत् ॥ कफपित्तकरामाषा : कफपित्तकरंदधि । कफपित्तकरामत्स्या वृन्ताकंकफपित्तकृत् ॥ मूलकंमाषसूपेनमधुनाचनभक्षयेत् ॥ रूप्यपरिमाणविशेषे ॥ द्वेकृष्णलेसमधृते विज्ञेयोरूप्यमाषक : ॥ परिमाणविशेषे । माषके ॥ सचमागधमानेसुश्रुतमते ५ गुञ्जाचरकमते ६ ८ गुञ्जापरिमाणम् । कालिङ्गमानेसुश्रुतमते ५ ७ ८ गुञ्जापरिमाणम् । वै

व्यकान्तरे १० गुञ्जापरिमाणम् । यथा । गुञ्जाभिर्दशभिर्माषः माषो माषचतुष्टयमितिवैद्यकपरिभाषा । मासाइति भाषा ॥ ज्योतिःस्मृतिमते १२ गुञ्जापरिमाणम् । यथा । पलन्तु लौकिकैर्मानैः साष्टरक्तिद्विमाषकम् । तोलकत्रितयं ज्ञेयं ज्योतिर्ज्ञैः स्मृतिसम्मतमिति तिथ्यादितत्त्वधृतवचनेनपलमष्टरक्तिकाधिकमाषद्वयाधिकतोलकत्रयम् । एतेनमाषकपरिमाणं द्वादशरक्तिकंभवति ॥ मूर्खे ॥ त्वग्दोषभेदे । मस्साइति भाषा ॥

माषकः । पुं० पञ्चरक्तिकपरिमाणं ॥ गुञ्जाः पञ्चाद्यमाषकइत्यमरः ॥ दशार्द्धगुञ्जंप्रवदन्तिमाषं माषाह्वयैः षोडशभिश्चकर्षमितिलीलावतीच ॥ षड्भिस्तुरक्तिकाभिः स्यान्माषकोहेमधान्यकौ । माषोगुञ्जाभिरष्टाभिः सप्तभिर्वाभवेत्क्वचिदितिभावप्रकाशः ॥

माषपर्णी । स्त्री० महासहायाम् । हयपुच्छौषधौ । काम्बोज्याम् । वनमाषे । माषाणीति० गौ०दे०भा० ॥ माषपर्णीहिमातिक्तारूक्षाशुक्रबलासकृत् । मधुराग्राहिणीशोफवातपित्तज्वरास्रजित् ॥

माषवर्द्धकः । पुं० स्वर्णकारे ॥

माषवटी । स्त्री० वटिकाविशेषे । उडरी० बड़ी० इ० भा० ॥ माषापिष्टिकाहिङ्गुलवणार्द्रकसंस्कृता । तयाविरचिताबद्धेवटिकासाधुशोषिता ॥ तलितास्तप्ततैलेता अथवासुप्रलेहिताः । वटकास्तद्गुणैर्युक्तास्तानतव्यारुचिदाम्भृशम् ॥

माषशः । अ० प्रतिमाषम् । इत्यर्थे ॥

माषादः । पुं० कच्छपे ॥ त्रि० माषभक्षके ॥

माषादिः । पुं० शमीधान्यगणे । माषआदिर्यस्यगणविशेषस्य सः । माषोमुद्गोराजमाषः कुलत्थश्चणकस्तिलः । काकाण्डश्चैवरइतिशमीधान्यगणः स्मृतः ॥

माषीणम् । न० माषक्षेत्रे । माष्ये ॥ माषाणांभवनं क्षेत्रम् । विभाषा तिलमाषोमाभङ्गाणुभ्यइतिपक्षे खञ् ॥

माषोण्डरी । स्त्री० इण्डरी० इन्दरी० सेफ० इतिहिमपर्वतप्रसिद्धेखाद्यद्रव्ये ॥

माष्यम् । न० माषीणे । माषक्षेत्रे ॥ माषाणांभवनम् क्षेत्रम् । विभाषातिलमाषेतिपक्षे यत् माषेभ्योहितं वा । खलयवमाषेत्यादिना यत् ॥

माः । पुं० चन्द्रे ॥ मासे ॥ मिमीते आनन्दमितिमाः । बाहुलकात्कि

बलादृष्यसि : ॥

मास : । पुं० श्वामे । वर्षांशे । शुक्लकृष्णपक्षद्वयात्मकेकाले ॥ मासोद्विविध : शुक्लादि : कृष्णादिश्च । तत्र चैत्रशुक्लप्रतिपदमारभ्यामावास्यापर्यन्तंशुक्लादि : । कृष्णपक्षप्रतिपदमारभ्यपूर्णिमापर्यन्तंकृष्णादि : ॥ माद्धकृत्वाख्यायम् । अण् । सौरादिषु यथा । मासश्चतुर्विध: प्रोक्त : सावनादिप्रभेदत: । त्रिंशद्दिनात्मकस्तत्रसावन : परिकीर्त्तित : ॥ एकस्मात्सङ्क्रमादासङ्क्रान्ति: सौरोऽभिधीयते । शुक्लपक्षादिकोमासश्चान्द्र : स्यादन्यथापिवा ॥ सर्वनक्षत्रभुक्त्यातुनाक्षत्रोमासउच्यते ॥ तत्र । आह्निकेपितृकृत्येचमासश्चान्द्रमस: स्मृत: । विवाहादौस्मृत: सौरोयज्ञादौसावनोमतइतिधिवेक : ॥ मस्यते परिमीयते चन्द्रवृद्धिक्षयाभ्यां वा: । मसीपरिणामे । कर्म्मणिघञ् ॥

मासजात : । त्रि० जननादूर्द्ध यस्य मासोगतस्तत्र ॥ तत्रैवव्यवहारात् । मासोजातस्यवयस : । काला : परिमाणिनेतिसमास : ॥

मासज्ञ: । पुं० दात्यूहे ॥ त्रि० मासविदि ॥

मासतम : । पुं० मासस्यपूरणे ॥ नित्यंशताद्दीतिडटस्तमडागम : । अतएवज्ञापकाट् डट् ॥

मासनम् । न० सोमराज्याम् ॥

माससान : । पुं० वत्सरे ॥ न० मासपरिमाणे ॥

मासर : । पुं० निस्रावे । भक्तसमुद्भवे मण्डे । मांड० पीच० द्रु० भा० ॥ मास्यते । मसीपरिणामे० बाहुलकादरन् ॥ यद्वा । मा० श्री : सरश्चत्र । स्त्र० पुंसीति ङ : ।

मासवर्त्तिका स्त्री० सर्पौपधिविशेषे ॥

मासान्त : । पुं० अमावास्यायाम् ॥ संक्रान्तिदिने ।

मासिकम् । न० अन्वाहार्ये । दर्शश्राद्धे ॥ पितॄणांमासिकंश्राद्धमन्वाहार्यंविदुर्बुधा : । तच्चामिषेणकर्त्तव्यंप्रशस्तेनप्रयत्नत : ॥ मासे भवम् । कालाट्ठञ् ॥ प्रेतस्य० संवत्सराभ्यन्तरे० प्रतिमासंस्तताहेक्रियमाणे श्राद्धे ॥ मासोदेवताऽस्यवा। कालेभ्योभववत् ॥ कर्म्मणि ॥ मासेदेयं । देयमृणे । ठक् ॥ त्रि० माससम्बन्धिनि । मासेननिर्वृत्तम् । ठञ् ॥ मासेभवंवा ॥

मासुरी । स्त्री० श्मश्रौ ॥

मासूर : । त्रि० मसूरविकृतौ ॥ मसूरस्यावयवोविकारोवा । बिल्वादाण् ॥

माक्ष । अ० चलम् । वारणे ॥ मा च स्म च । चनयो : समाहार : ॥

माहाकुल: । त्रि० महाकुलीने ॥ महाकुलस्यापत्यम् । महाकुलादग् खञावितिञ्ज् ॥

माहाकुलीन: । त्रि० महाकुले ॥ महाकुलस्यापत्यम् । महाकुलादितिपक्षेखञ् ॥

माहाजनिक: । त्रि० महाजनायहिते ॥ महांश्चासौजनश्च । महाजनाट्ठञ् । बहुब्रीहिस्तु । महाजनीय: ॥

माहात्म्यम् । न० महात्मत्वे ॥ प्रभावे ॥ महात्मनोभाव: । ष्यञ् ॥ अनतिशयैश्वर्ये । विश्वसृष्ट्यादिकर्तृत्वेप्यविकारित्वे । शुभाशुभकर्मकारयितृत्वेप्यवैषम्ये । बन्धमोचादिफलदातृत्वेप्यसङ्गौदासीन्ये ॥

माहाराजिक: । पुं० गणदेवताभेदे ॥ महाराजोदेवतैषाम् । महाराजप्रोष्ठपदाट्ठञितिठञ् ॥ महाराजोभक्तिरस्यवा । महाराजाट्ठञ् ॥

माहाव्रती । स्त्री० पाशुपतव्रतसम्बन्धिन्यांपद्धतौ ॥

माहिनम् । न० राज्ये ॥ मह्यतेऽस्मिन् । मह० महेरिनण्चेतीनण् ॥ त्रि०महनीये ॥

माहिर: । पुं० देवराजे । इन्द्रे ॥

माहिषम् । न० महिष्याधर्मे ॥ अण् महिष्यादिभ्य: ॥ त्रि० महिषसम्बन्धिनि ॥ महिषोपजीविनि । महिष्या: ० महिषस्यवा०इदम् । अण् ॥

माहिषमस्तक: । पुं० शालिप्रभेदे ॥

माहिषिक: । पुं० महिषजीवने ॥ महिषीपतौ । व्यभिचारिण्यनुरक्तपतौ ॥ यथा । महिषीत्युच्यतेनारी याचस्याद्व्यभिचारिणी । तांदुष्टांकामयतिय: सवैमाहिषिक: स्मृत: ॥ भगद्वारोपार्ज्जितस्त्रीधनोपजीविनि ॥ यथा । महिषीत्युच्यते भार्याभगेनोपार्जितंधनम् । उपजीवतियस्तस्या: सवैमाहिषिक: स्मृतइति ॥

माहिष्मती । स्त्री० शिशुपालनगर्याम् ॥

माहिष्य: । पुं० वर्णसङ्करजातिविशेषे । वैश्यायांक्षत्रियादुत्पन्ने ॥ नक्षत्रजीवनंनृत्यगीतेसस्यरक्षणम् । माहिष्याणांवृत्ति: प्रोक्ताचोशनसास्मयम् ॥

माहेन्द्र: । पुं० शुभदण्डविशेषे ॥ रव्यादिवारेषुवायुवरुणयमसहेन्द्राणामेकैकदण्डाभवन्ति०तत्रवरुणमहेन्द्रयोर्दण्डौशुभौ । वायुयमयोर्दण्डावशुभौ ॥ यथा । ख्यातंवावयमासूर्येमावावयकलानिधौ । वयमावाकुजेज्ञेयामाशावयसुधांशुजे ॥ गुरौवावयमाचैव०मावावयतथाभृगौ । सूर्यपुत्रेयमावावघटीयुग्मंक्रमेशु

माहाकुल: । त्रि० महाकुलीने ॥ महाकुलस्यापत्यम् । महाकुलादञ् खञावितिखञ् ॥

माहाकुलीन: । त्रि० महाकुले ॥ महाकुलस्यापत्यम् । महाकुलादिति पक्षे खञ् ॥

माहाजनिक: । त्रि० महाजनायहिते ॥ महांश्चासौजनश्च । महाजनाट्ठञ् । बहुव्रीहिस्तु । महाजनीय: ॥

माहात्म्यम् । न० महात्मत्वे ॥ प्रभावे ॥ महात्मनोभाव: । ष्यञ् ॥ अनतिशयैश्वर्यं । विश्वस्रष्ट्यादिकर्तृत्वे प्यविकारित्वे । शुभाशुभकर्मकारयितृत्वे प्यवैषम्ये । बन्धमोक्षादिफलदातृत्वे प्यसङ्गौदासीन्ये ॥

माहाराजिक: । पुं० गणदेवताभेदे ॥ महाराजोदेवतैषाम् । महाराजप्रोष्ठपदाट्ठञ्िति० ठञ् ॥ महाराजोभक्तिरस्यवा । महाराजाट्ठञ् ॥

माहाव्रती । स्त्री० पाशुपतव्रतसम्बन्धिन्यांपद्धतौ ॥

माहिनम् । न० राज्ये ॥ मह्यतेऽस्मिन् । मह० महेरिनण्चेतीनण् ॥ त्रि०महनीये ॥

माहिर: । पुं० देवराजे । इन्द्रे ॥

माहिषम् । न० महिष्याधर्मे ॥ अण्महिष्यादिभ्य: ॥ त्रि० महिषसम्बन्धिनि ॥ महिषोपजीविनि । महिष्या: ० महिषस्त्रवा०इदम् । अण् ॥

माहिषमस्तक: । पुं० शालिप्रभेदे ॥

माहिषिक: । पुं० महिषजीवने ॥ महिषीपतौ । व्यभिचारिण्यनुरक्तपतौ ॥ यथा । महिषीत्युच्यतेनारी याचस्याद्व्यभिचारिणी । तांदुष्टांकामयतिय: सवैमाहिषिक: स्मृत: ॥ भगद्वारोपार्ज्जितस्त्रीधनोपजीविनि ॥ यथा । महिषीत्युच्यते भार्याभगेनोपार्जितंधनम् । उपजीवतियस्तस्या: सवैमाहिषिक: स्मृतइति ॥

माहिष्मती । स्त्री० शिशुपालनगर्याम् ॥

माहिष्य: । पुं० वर्णसङ्करजातिविशेषे । वैश्यायांक्षत्रियादुत्पन्ने ॥ नक्षत्रजीवनंनृत्यगीतेसस्यरक्षणम् । माहिष्याणांशुभावृत्ति: प्रोक्ताचोशनसाम्स्वयम् ॥

माहेन्द्र: । पुं० शुभदण्डविशेषे ॥ रव्यादिवारेषुवायुवरुणयममहेन्द्राणामेकैकदण्डाभवन्ति०तत्रवरुणमहेन्द्रयोर्दण्डौशुभौ । वायुयमयोर्दण्डावशुभौ ॥ यथा । ध्यातंवावयमासूर्येमावावयकलानिधौ । वयमावाकुजेज्ञे यामावावयसुधांशुजे ॥ गुरौवावयमाचैव०मावावयतथाभृगौ । सूर्यपुत्रे यमावावघटीयुग्मंशु

मिथः । अ० अन्योन्यस्मिन् सहार्थे ॥ रहोर्थे ॥ मेथति । मेथृसङ्गमे । असुन् । पृषोदरादित्वाड्रस्वः ॥

मिथिः । पुं० निमिराजपुत्रे । जनके ॥

मिथिला । स्त्री० जनकपुर्याम् ॥ विदेहायाम् ॥ देशविशेषे । तैरभुक्ती । तिरहित० इ० भा० प्र० ॥ यथा । गण्डकीतीरमारभ्यचम्पारण्यान्तकंशिवे । विदेहभूः समाख्याता तैरभुक्ताभिधः सतु ॥ मथ्यंतेरिपवोऽत्र । मथ विलोडने । मिथिलादयश्चेतीलच् । अकारस्येत्वंनिपातनात् ॥

मिथु । अ० द्वाविच्यर्थे ॥

मिथुनम् । न० स्त्रीपुंसयोर्युग्मे । द्वन्द्वे । युगले ॥ जुगल० जोडी० इ० भा० ॥ द्वयोः ॥ सुरते । द्वन्द्वजनितसुखे ॥ तृतीयराशौ । मिथुने ॥ मिथुनलग्नजस्यफलंयथा । मिथुनोदयसञ्जातोमानीस्वजनवत्सलः । त्यागीभोगीधनीकामीदीर्घसूत्रीरिमर्दनः । मेथति । मिथृसङ्गमेच । क्षुधिपिशिमिथिभ्यः कित्दित्युनन् उपसर्गविशिष्टेधातौ । सम्बन्धे ॥

मिथुनाधिपः । पुं० बुधग्रहे ॥

मिथो । अ० रहसि ॥ सहार्थे । अन्योन्यस्मिन् ॥ मेथति । मेथृ० । बाहु लकादोः । पृषोदरादित्वाड्रस्वः ॥

मिथ्या । अ० अनृते । वितथे ॥ प्रागभावयुतत्वेसत्यचिन्त्यरचनात्वंमिथ्यात्वमितिमिथ्यालक्षणम् ॥ यदसद्भासमानं तन्मिथ्यास्वप्नगजादिवदितिच ॥ स्त्री० अधर्मपत्न्याम् ॥ यथा । अधर्मपत्नीमिथ्यासासर्वधूर्त्तैस्सुपूजिता । यथाविनाजगत्सर्वमुच्छिन्नंविधिनिर्मितम् ॥ मिथ्ययाविनाधूर्त्तसमुदायरूपमुच्छिन्नंभवति । मिथ्याभाषणाभावेधूर्त्तत्वस्याभावात् इत्यर्थः । सत्येचादर्शनायाचत्रेतायांसूक्ष्मरूपिणी । अर्द्धावयवरूपाचद्वापरेचैवसंवृता ॥ कलौमहाप्रगल्भाचसर्वत्रव्यापिकाबलात् । कपटेनसमंभ्रात्राअमत्यवरुद्गेहेइति ॥ मथते । मथ० । अघ्न्यादित्वात्साधुः ॥

मिथ्याचारः । त्रि० पापाचारे ॥ सत्वशुद्ध्यभावेनफलायोग्यत्वात् ॥

मिथ्याज्ञानम् । न० भेदाग्रहपूर्वके० अन्यस्यान्यात्मतावभासे ॥

मिथ्यादर्शनम् । न० शास्त्रोपपत्तिवाह्यद्वैतदर्शने ॥

मिथ्यादृष्टिः । स्त्री० कर्मफलापवादकज्ञाने । नास्तिकतायाम् ॥ मिथ्येत्यपक्षे० तद्विषयिणीदृष्टिर्ज्ञानम् ॥ असत्यदर्शने ॥

मिथ्याध्यवसितिः । स्त्री० मिथ्याध्यव साये ॥

मिथ्यानिरसनम् । न० अपर्थे ।

मिथ्याप्रयुक्तः । त्रि० यदर्थं प्रतिपाद नायप्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदो षात्प्रतिपादयति । शब्दे ॥

मिथ्याभियोगः । पुं० अभ्याख्याने । शतं मेधारयसीत्यादिमिथ्योद्भावन रूपे० मिथ्यापवादे ॥ मिथ्याचासा वभियोगश्च ॥

मिथ्याभिशंसनम् । न० अभिशापे । । स्वर्णं स्तेयं त्वयाकृतमित्यादिमि थ्यास्तेयादिसाधनरूपे मिथ्यारोप वाक्ये ॥ अभिशंसे भावे ल्युट् ॥

मिथ्याभिशापः । पुं० मिथ्यापवादे ॥ यथा । शुक्लपक्षे चतुर्थ्यान्तु सिंहे चन्द्रस्य दर्शनम् । मिथ्याभिशापं कुरुते नपश्येत्तत ततः ॥

मिथ्यामतिः । स्त्री० भ्रान्तौ । भ्रमे ॥ मिथ्याचासौ मतिश्च ॥

मिथ्याविनीतः । त्रि० कपटेनविन यिनि ॥

मिथ्यासाक्षी । त्रि० कूटसाक्षिणि ॥ तस्यज्ञानप्रकारमाहयाज्ञवल्क्यः । उक्तेपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः । द्विगुणावान्यथाब्रू युः कूटाः स्युः पूर्वसाक्षिणः ।

मिथ्योत्तरम् । न० चतुर्विधोत्तरान्तर्गतो त्तरविशेषे ॥ तल्लक्षणं यथा । अभि युक्तोऽभियोगस्य [illegible] मर्यादपह्नवम् । मिथ्यातत्तुविजानीयादुत्तरं व्यव हारतः ॥ तच्चतुर्विधं [illegible]था । मि थ्यैतन्नाभिजानामि [illegible] सं निधिः । अजातश्चास्मि [illegible]ले० इतिमिथ्याचतुर्विधम् ॥ इति[illegible] हारतत्त्वं ॥

मिथ्योपलब्धिः । स्त्री० मायागन्धर्व नगरादिज्ञाने ॥ मिथ्याचासावुपल ब्धिश्च ॥

मिद्धम् । न० चिन्ताभिसङ्कर्षे ॥ आलस्ये ॥ वित्ते ॥ निद्रायाम् ॥

मिन्मिनः । त्रि० सानुनासिकवाक्य [illegible] । गुन्गुना० इ० भा० ॥ स्त्री [illegible]० इ० गौ० दे० भा० । मीमणा इ० पर्वतीयभाषा ॥ अस्यनिदान न्तु । [illegible]वायुः सकफोधमनीः शब्दवाहिनीः । नरान्करोत्यक्रि यकान्मूकमिन्मिनगद्गदान् ॥

मिमङ्क्षुः । त्रि० मङ्क्तुमिच्छौ ॥ मज्जेः सन्नन्तादुप्रत्ययः ॥

मिमन्थिषुः । त्रि० मथितुमिच्छौ ॥ मथेः सन्नन्तादुः ॥

मिमानः । त्रि० मानङ्कुर्वाणे ॥ माङोलटः शानजादेशः । श्लावि तिद्विर्भावः ॥

मिम्मिणः । त्रि० )
मिम्मिनः । त्रि० ) मिन्मिने ॥

मिसि : । स्त्री० मधुरायाम् ॥ जटामांस्याम् ॥ शतपुष्पायाम् ॥ अजमोदायाम् ॥ मस्यति । मसीपरिणामे । सर्वधातुभ्यइन् । बाहुलकादत : स्यादिइ : ॥ उशीर्याम् ॥

मिसी । स्त्री० मिसी । तपस्विन्याम् । जटामांस्याम् ॥ मस्यति । मसी० । इन् । कृदिकारादितिङीष् । पृषोदरादि : ॥

मिह्रिका । स्त्री० अवश्याये । नीहारे । तुषारे । मेहति । मिहसेचने । क्वुन् शिल्पिसंज्ञयोरितिक्वुन् ॥

मिहिर : । पुं० विकर्त्तने । अर्के । मार्तण्डे । सूर्ये ॥ मेघे ॥ बुद्धे ॥ मेहति । मिह० । इषिमदिमुदिखिदीतिकिरच् ॥ वायौ ॥ वृद्धे ॥

मिहिराण : । पुं० जगद्योनौ । शिवे ॥

मीढ : । त्रि० मूत्रिते ॥ मिह्यतेस्म । मिह० । क्त : ॥ सिक्ते ॥

मीढुष्टम : । पुं० शिवे ॥

मीढ्वान् । पुं० शिवे ॥ मीढ्वांसौ० मीढ्वांस : इत्यादि ॥

मीत : । त्रि० हते ॥ मीयतेस्म । मी अहिंसायाम् । गत्यर्थेतिकर्त्तरिकर्मणिवाक्त : ॥

मीन : । पुं० मत्स्ये ॥ राशिविशेषे । चन्द्रभे । तज्जातस्यफलंयथा । मीनलग्ने समुत्पन्नो रत्नकाञ्चन-

पूरित : । अल्परोमाशस्त्राशस्त्रोदीर्घकालपरीक्षक : । मीनाति० मी यतेवा । मञ्० फेनमीनावितिनिपातित : ॥ भगवतोविष्णो : प्रथमावतारे ॥ प्रकृतिर्विष्णुरूपाचपुंरूपश्चमहेश्वर : । एवंप्रकृतिभेदेनभेदास्तुप्रकृतेरिह ॥ कृष्णरूपाकालिकास्याद्रामरूपाचतारिणी । बगलाकूर्ममूर्त्ति : स्यान्मीनोधूमावतीभवेत् । छिन्नमस्तानृसिंह : स्याद्वराहश्चैवभैरवी । सुन्दरीजामदग्न्य : स्याद्रामोभुवनेश्वरी ॥ कमलाबौद्धरूपास्यान्मातङ्गीकल्किरूपिणी । स्वयंभगवतीकालीकृष्णस्तुभगवान्स्वयम् ॥ स्वयञ्चभगवान्कृष्ण : कालीरूपीभवद्व्रजे ॥

मीनकेतन : । पुं० प्रद्युम्ने । कन्दर्पे ॥ मीनशब्दोजलचरोपलक्षणार्थ : । मीनोमकर : केतनंध्वजोयस्यस : ॥

मीनगोधिका । स्त्री० जलाशये ॥

मीनघाती । पुं० बके ॥ त्रि० मत्स्यघातके ॥

मीननेत्रा । स्त्री० गण्डदूर्वायाम् ॥

मीनर : । पुं० जलरूपे । मकरे । अतिदंष्ट्रके ।

मीनरंक : । पुं० पक्षिविशेषे । मत्स्याशने ॥

मीना । स्त्री० उषाकन्यायाम् । कश्यपस्यभार्यायाम् ॥

का: पाचकैः प्रोक्तास्ते स्याद्र्दं कवटाश्चपि ॥ मुद्राद्र्दं कवटाख्या सघवी वलकारका: । दीपना सर्पणामध्या श्लिष दोषेषु पूजिता: ॥

**मुद्रा** । स्त्री० प्रत्ययकारिण्याम् । छाप० इ० भाषाप्रसिद्धायाम् ॥ मोदतेऽनया । मुद० । स्फायितञ्चीति रक् ॥ चिन्हे ॥ पञ्चविधलिप्यन्तर्गतलिपिविशेषे । छापाअक्षरइति- भा०प्र० ॥ यथोक्तं वाराहीतन्त्रे मुद्रालिपिः शिल्पलिपिर्लिपिर्लेखनिसम्भवा । गुण्डिकाघुणसम्भूतालिपयः पञ्चधास्मृताः एताभिर्लिपिभिर्व्याप्ताधरित्रीशुभदाहरेति ॥ मुण्डमालातन्त्रेपियथा । लेखन्याखिखितं विप्रैर्मुद्राभिरङ्कितश्चयत् । शिल्पादिनिर्मितं यच्चपाठ्यं धार्यञ्चसर्वदा ॥ इ० ॥ लोकप्रसिद्धा०स्वर्णरौप्यनहूकयोः ॥ पुराणाद्युक्ता०शरीरधार्यश्रीभगवतश्चायुधादिचिन्हे ॥ तच्चायुधाङ्कितं देहं यो नृत्यन्नस्तुरूखिया । प्रयागादिषु तीर्थेषु समस्त्वा किं करिष्यति ॥ यदायस्य प्रपश्ये तद्देहं शङ्खादिचिन्हितं । तदा तदाजगत्सर्वमौतुष्टोहरति पातकम् ॥ अन्यस्यदेहेतु यथै राणदिने दिने । शङ्खचक्रगदापद्म लिखितस्सोऽच्युतः स्वयम् ॥ नारायणायुधैर्युक्तं कृत्वात्मानं कलौयुगे । कुरुतेपुण्यकर्माणिमेरुतुल्यानितस्यवै ॥ शङ्खादिनाङ्कितो भूत्वा श्राद्धं यः कुरुते द्विजः । विधिहीनन्तु सम्पूर्णं पितॄणां स्वगयासमम् ॥ यथाग्निर्दहते कक्षं वायुना प्रेरितोभृशम् । तथा दहन्ति पापानि दृष्टा कृष्णायुधानि वै ॥ देवताप्रीतिजनिकाङ्गुलिरचनायाम् ॥ मोदनात्सर्वदेवानांद्रावणात्पापसन्ततेः । तस्मात्मुद्रेति साख्यातासर्वकामार्थसाधनी

**मुद्राङ्कितः** । त्रि० मुद्रिते । मुद्रया चिह्निते । मोहरकियो० इ० भा० प्र० ॥

**मुद्रालिपिः** । स्त्री० पञ्चधालिप्यन्तर्गतलिपिविशेषे । छापेकाअक्षर० इतिभाषा ॥

**मुद्रिका** । स्त्री० स्वर्णरूप्यादिनिर्मितमुद्रायाम् ॥

**मुद्रितः** । त्रि० अप्रफुल्ले । सङ्कुचिते । निद्राणे । मीलिते । मुद्रा० इ० भा० ॥ मुद्राङ्किते ॥

**मुधा** । अ० व्यर्थे ॥ मुह्यति । मुह वैचित्त्ये । काप्रत्ययः । पृषोदरादित्वात्हस्य धः ॥

**मुनिः** । पुं वशिष्ठादौ ॥ वाचंयमे । मौनिनि ॥ ज्ञानातिशयवति ॥ मननशीले । विवेकिनि । सन्न्यासि

सिनि । परमार्थतत्त्वस्यमनना न्मु निरिति शाङ्कृताव्युत्पत्ति र्नेतरो जनः शास्त्रविदपि तत्त्वज्ञानाभावात् । सदामननशीले येजाः स्मृतःमुनिः सद्भि । स्थितधीर्मुनिरुच्यते ॥ दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ मौनात्सम मुनिर्भवति नारण्यवसनान्मुनिः । स्वलक्षणन्तु योवेद सममुनिः श्रेष्ठउच्यते ॥ अगस्त्ये ॥ बुधे ॥ मन्यते । मन ज्ञाने । मनेरुच्च तीन् उपधाया उत्वञ्च । किदित्यनुवृत्तेनान्नगुणः ॥ वकुसेने । अगस्त्यद्रुमे ॥ अर्हति । पियाले किंशुके ॥ दमनकवृक्षे । सप्तर्षौ ॥

मुनिखर्जूरिका । स्त्री० खर्जूरीप्रभेदे ॥

मुनिच्छदः । पुं० सप्तच्छदवृक्षे ॥

मुनितरुः । पुं० वकवृक्षे ॥

मुनिद्रुमः । पुं० वकपुष्पे । वकुसेने । अगस्तिया० हि० भा० प्र० वृक्षे ॥ श्योनाकवृक्षे ॥ मुनिसंज्ञकोद्रुमः । शाकपार्थिवादिः ॥

मुनिनिर्मितः । पुं० डिण्डिशे । डिंडसो० टिंडा० हि० प्र० फलशाके ॥ मुनिनानिर्मितः ॥

मुनिपित्तलम् । न० ताम्रे ॥

मुनिपुत्रः । पुं० दमनकद्रुमे । ऋषिसुते ॥

मुनिपुत्रकः । पुं० भद्रनामनि । खञ्जने

मुनिपुष्पः । पुं० अगस्तिद्रुमे ॥ न० अगस्त्यपुष्पे

मुनिपूगः । पुं० रामपूगे । कामीने ॥

मुनिभेषजम् । न० आगस्त्यहरीतक्याम् । अगस्तिपथ्यायाम् ॥ लङ्घने ॥

मुनिव्रतः । त्रि० उपशान्ते ॥ मुनीनांव्रतमस्य ॥

मुनिसुव्रतः । पुं० सुव्रताख्ये बुद्धभेदे ॥

मुनिस्थानम् । न० आश्रमे ॥

मुनीन्द्रः । पुं० श्रीघने । बुद्धे । जिने ॥ मुनिषुइन्द्रः श्रेष्ठः ॥

मुन्यन्नम् । न० नीवारादौ ॥ मुनेर्वानप्रस्थस्य अन्नम् ॥

मुमुक्षुः । पुं० यतौ । संसारग्रन्थिभेदनैककृतप्रयत्ने ॥ साधनचतुष्टयसम्पन्ने ॥ यथा । काव्यनाटकतर्कादीनभ्यस्यतिनिरन्तरम् । विजिगीषुर्यातद्वन्मुमुक्षुः स्वं विचारयेदिति ॥

मुमुक्षुता । स्त्री० मोक्षेच्छायाम् ॥ संसारबन्धनिर्मुक्तिः कथं स्यान्मे कथाविधे । इतियासुदृढाबुद्धिर्

मुशली । स्त्री० पल्ल्याम् ॥ तालमूल्याम् ॥ इ० राजनिर्घंरट : ॥

मुषल : । पुं० न० मुसले ॥ मुषस्यनेनया । मुषखण्डने० इतिधातोर्दैन्त्यान्ते पुमूर्द्धन्यान्ते पुचवेरैदेवाचेयादिभि : पठितत्वात्कल : ॥

मुषा । स्त्री० मूषायाम् ॥ मुष्णाति । मुषस्तेये । भिदाद्यङ् । टाप् ॥

मुषित : । त्रि० वञ्चिते ॥ हृते ॥ खण्डिते ॥ मुष्यतेस्म । मुषस्तेये । क्त : ॥ नमुषितांक्षियंप्रेक्षेत । च वमुषितेवमुषितार्थेरे इंसवक्त्रे व० नमेस्यर्थ इतिव्याख्येयम् ॥

मुष्क : । पुं० अण्डकोषे । तस्करे ॥ मुष्णातिरेत : । मुष० । स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक् ॥ ... ॥ मांसले ॥

मुष्कक : । पुं० घण्टापाटली । गोलीढे । मुष्के । भाटले । मोच्चे ॥ मुष्ककः कटुकस्तिक्तोग्राही श्वा : कफवातहृत् । विषमेदोगुल्मकण्डूवस्तिरुक्कृमिशुक्रनुत् ॥ मुष्णाति रोगम् । मुषे : कक्रन्तात्० स्वार्थे कन् ॥

मुष्कर : । पुं० समुष्के ॥ प्रलम्बाण्डे ॥ मुष्कोण्ड : । सोखास्ति । ऊष सुषीतिर : ॥

मुष्कशून्य : । पुं० दण्डधररहिते । अनुपस्थे । स्त्रीस्वभावे । महल्लिके । राज्ञोन्त : पुररक्षके । खोजा० भाषा ॥

मुष्ट : । त्रि० चोरिते ॥ मुषितः ॥

मुष्टि : । पुं० स्त्री० पलपरिमाणे । चारतोला इतिभाषा ॥ बद्धपाणौ । मुट्ठी० इ० भा० । अङ्गुलिसन्निवेशोमुष्टि : ॥ यथा । ग्रासमुष्टिंपरगवेसान्नंदद्यात्स्वय: सदा । अकृत्वास्वयमाहारंस्वर्गलोकंसगच्छती तिवौधायनस्मरणम् ॥ त्सरौ । मूठ ० इतिभाषा ॥ धान्यमानभेदे । कुडवाष्टभागे । छटांक० इ०भा० ॥ मोचके । सङ्कोचने । मुष्यतेनवा । मुष० । स्त्रियांक्तिन् ॥ यद्वा । मुष्णाति । क्तिच् ॥ प्रहारविशेषे । मुक्की इतिभाषा ॥ पथिक्षुधार्त्तस्यतिलादीनांमुष्टिग्रहणेचौर्याभावो यथा । तिलमुद्गयवादीनांमुष्टिर्ग्राह्यापथिस्थितै : । क्षुधार्त्तैर्नान्यथा विप्रविधिविज्ञैरितिस्थिति: ॥

मुष्टिक : । पुं० कंसासुरमल्लविशेषे ॥ स्वर्णकारे ॥

मुष्टिकान्तक : । पुं० बलदेवे ॥ मुष्टिकस्यान्तक : ॥

मुष्टियुद्धम् । न० बाहुयुद्धे । द्यूतप्रभेदे ॥

मुष्टिन्धय : । पुं० बालके ॥ मुष्टिंध

मुदीत्यादिनाकिरच् ॥

मुहुर्भाषा । स्त्री० पुनःपुनःकथने । अनुलापे ॥ मुहुर्भाषणम् । भाष० घञ् ॥

मुहुः । अ० पौनःपुन्ये । मोहनम् । मुह० । मुहेः किच्चेत्युसिः ॥ पुनरर्थे ॥

मुहूर्त्तः । पुं० न० द्वादशक्षणात्मके काले ॥ त्रिंशत्कालात्मकेकाले ॥ दण्डद्वयात्मकेकाले ॥ मुहूर्त्तं घटिकाद्वयमित्युक्तेः ॥ अक्षिपक्ष्मपरिक्षेपोनिमेषः परिकीर्त्तितः । द्वौ निमेषौत्रुटिर्नामद्वत्रुटीतुलवः स्मृतः ॥ द्वौलवौक्षणइत्युक्तः काष्ठाप्रोक्ताद्दशक्षणः । त्रिंशत्काष्ठाकलाप्रोक्ताकलात्रिंशन्मुहूर्त्तकः ॥ पुराणोक्तलक्षणन्तु । रौद्रः श्वेतस्तथामैत्रस्ततः सारभटः स्मृतः ॥ सावित्रोवैश्वदेवश्चगन्धर्वः कुतपस्तथा । रौहिणस्तिलकश्चैवविजयोनिर्ऋतिस्तथा ॥ शंवरोवरुणश्चैवभगः पञ्चदशस्मृतः ॥ इतिदिनपञ्चदशभागैकभागे ॥ यथा । प्रातःकालोमुहूर्तांस्त्रीन्सङ्गवस्तावदेवतु । मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णस्ततःपरम् ॥ सायाह्नस्त्रिमुहूर्त्तः स्याच्छ्राद्धं तत्रनकारयेत् । राक्षसीनामसावेलागर्हिता सर्वकर्मसु ॥ हूर्च्छति । हूर्च्छाकौटिल्ये । अस्माल्लिङ्द्येॅर्मोहूर्त्तिकइतिनिर्द्देशान्मुहूर्त्तशब्दोनिष्पन्नः ॥ अल्पकाले ॥ दिनशुद्धिविशेषे । लक्षणयातदुपलक्षितेकाले ॥

मुहिरः । त्रि० मूर्खे ॥ मुह्यति । मुह० । मूलेरादयश्चेतिसाधुः ॥

मुह्यमानः । त्रि० अनेकानर्थप्रकारैरविवेकतयाविक्षिप्तचित्ततयाचिन्तामापद्यमाने ॥

मूः । स्त्री० बंधने ॥

मूकः । पुं० जलेशये । मत्स्ये ॥ दैत्ये ॥ त्रि० अवाचि । वर्णानुच्चारके ॥ दीने ॥ मूमितिकायति । कै० । आतोनुपेतिकः ॥

मूढः । त्रि० तन्द्रिते ॥ बाले । जड ॥ मूर्खे । यथाजाते ॥ स्वाज्ञानकार्यं विपर्ययंवोहव्यापी ॥ इदमर्थसाधनमिदमनर्थसाधनमितिविवेकशून्ये । अविचारके । अविवेकिनि । अनात्मविदि ॥ तन्द्रादिग्रस्तचित्ते । तमसाच्छन्ने । मोहयुक्ते ॥ चित्तस्यद्वितीयायांभूमौ ॥ मुह्यतिस्म । मुह० । गत्यर्थेतिक्तः ॥ आकाशादिपुरस्सरेषुकेचित्तमः प्रधानतयामूढाः मोहप्रकाशकाः विषयाः गुरवः केचिद्विशेषास्तेमूढाः कथ्यन्ते ॥

मूढग्राहः । पुं० अविवेकातिशय

| मूत्रम् | मूत्रकृच्छ्रम् |
|---|---|

कृतिदुराग्रहे ॥ आहोग्रहणम् । मूढानांग्राह: ॥

मूढता । स्त्री० अंकार्यपरिज्ञानत्वे ॥ अविवेकतायाम् ॥ यथा । यानं चितौयानगतस्य देहोदेहेपिचान्ध: पुरुषोनिविष्ट: । ममत्वमुर्व्यां नतथा यथाऽस्मिन्देहेऽतिमात्रं वतमूढतैषेति ॥

मूढदृक् । त्रि० देहमानिनि । देहमात्मत्वेनाभिमन्यमाने ॥

मूढयोनि: । पुं० पश्वादौ ॥

मूढा । स्त्री० तामस्यांकलसोहर्तौ ॥

मूत: । त्रि० बद्धे ॥ मूयतेस्म । मूङ् बन्धने । क्त: ॥ आलानपाशे ॥

मूत्रम् । न० प्रस्रावे । मूत० प्रिसाव० द्व०आ० ॥ मूत्र्यते । मूत्रप्रस्रवणे । घञ् ॥ मूत्रमित्याहुरुदकंवस्तेरवानिलनिर्गतम् ॥ यद्वा । मुच्यते यत् । मुचलृ० । सिविमुच्योष्टेरुच्चेतिष्ट्रन् ॥ अथास्यगुणा: । गोमूत्रं कटुतीक्ष्णोष्णं क्षारं तिक्तं कषायकम् । लघ्वग्निदीपनं मेध्यं पित्तकृत्कफवातहृत् ॥ शूलगुल्मोदरानाहकण्डूक्षिमुखरोगजित् । किलासगदवातामवस्तिरुक्कुष्ठनाशनम् ॥ कासश्वासापहं शोथकामलापाण्डुरोगहृत् । कण्डूकिलासमन्दशूलमुखाक्षिरोगान्गुल्मातिसारमरुदामयमूत्ररोधान् । कासं सकुष्टजठरक्रिमि

पाण्डुरोगान् गोमूत्रमेकमपिपीतमपाकरोति ॥ सर्वेष्वपिचमूत्रेषु गोमूत्रं गुणतोधिकम् । अतोविशेषात्कथनेमूत्रं गोमूत्रमुच्यते ॥ प्लीहोदरश्वासकासशोथवर्चोग्रहापहम् । शूलगुल्मरुजानाहकामलापाण्डुरोगनुत् ॥ कषायं तिक्ततीक्ष्णञ्चपूरणात्कर्णशूलहृत् ॥ नरमूत्रं गरं हन्तिसेवितं तद्रसायनम् । रक्तपामाहरं तीक्ष्णं सक्षारलवणं स्मृतम् ॥ गोजाविमहिषीणान्तुस्त्रीणांमूत्रं प्रशस्यते । खरोष्ट्रेभनराश्वानांपुंसांमूत्रं हितं मतम् ॥ अथमूत्रपरीक्षा । वातेनपाण्डुरं मूत्रं रक्तंनीलञ्चपित्तत: । रक्तमेवभवेद्रक्ताद्धवलंफेनिलंकफादिति ॥

मूत्रकृच्छ्रम् । न० प्रस्रावघटितरोगविशेषे । मूत्ररोधे । अश्मर्याम् । कृच्छ्रे ॥ मूत्रकृच्छ्रमत्र ॥ अथास्यचिकित्सा । त्रिकण्टकारग्वधदर्भकाशयवासधात्रीगिरिभेदपथ्या: । निघ्नन्तिपीतामधुनाश्मरीञ्चसमीपस्थयोरपिमूत्रकृच्छ्रम् ॥ त्रिकण्टकादिक्वाथ: ॥ १ ॥ एलाश्मभेदकशिलाजतुगोक्षुराणांसैर्वारुबीजलवणोत्तमकुङ्कुमानाम् । चूर्णानितण्डुलजलेलुलितानिपीत्वाप्रत्यच्चकृच्छ्रमपिजीवतिमूत्रकृच्छ्री ॥ एलादिचूर्णम् ॥ २ ॥ अयोरज:

मृग:

हानिर्यस्मीरिता:॥ इतिकालिका
पुराणे ६७ अध्याय: अथमृगपरी
क्षा। मृगजातिंसमादातुंकौतुका-
र्थंतथापुन:। मृगा: पोष्यामही-
न्द्राणांतेषांवक्ष्यामिलक्षणम्॥ पृ
थिव्यम्बुतेजोगगनतेजोभिश्चास्तुपञ्च
धा। भिद्यन्तेक्रमेणास्तुसमस्तामृग
जातय:॥ तद्यथा। येगन्धिन: श्री
वाश्रीरक्तवर्णास्ते पार्थिवागन्धमृगा:
प्रदिष्टा:। सर्वाङ्गमेषांसुरभिजका
संपुण्यप्रदेशेप्रभवन्तितेतु॥ येवैवि
शालागुरुदीर्घशृङ्गाश्चमांसलास्तो
यमृदुदेहा:। आप्यास्तुतेवैप्रसर
न्तिभूरिसर्वत्रदेशेप्रभवन्तिचैव॥ धा
वन्तियेवातमिवान्तरीक्षेदीर्घास्तुते-
वातमृगा: प्रदिष्टा:। तेयत्रयत्रै
वभवन्तिशक्तास्तत्रैवसर्वाणिशुभा-
निसन्ति॥ लघुप्रमाणालघुवीर्यस-
त्वानिर्गन्धदेहाम्बुगजप्रमाणा:।
तेगागनावेगजरानराणांस्पृश्यानते
नापिनिरीक्षणीया:॥ येकृष्णवर्णा
गुरुदीर्घशृङ्गा: क्रुद्धाभ्रमंयान्ति
चवायुवेगा:। तेकृष्णसारा: खलु
तैजसास्तुपुण्यप्रदेशेप्रभवन्तितेतु॥
भोजोप्याह। पार्थिवादिमृग: सर्व
श्चतुर्जातिर्भवेत्पृथक्। सुशृङ्गास्त
नुलोमानोब्राह्मणामृगजातय:॥
क्रुद्धा: पञ्चरिम्शृङ्गाश्चक्षत्रिया:
खरलोमशा:। आवर्तशृङ्गास्तनवो

मृग:

हरिणावैश्यजातय:॥ कुशृङ्गावाप्य
शृंगावाशूद्रा:खरतनूरुहा:। अङ्गा
नांयेतुयादोषा सोक्षयाहरिणेष्व
पि॥ तथापिदोषा: पञ्चामीवक्ष्य
न्तेहरिणाश्रया:। नेत्रयोरन्तरेय
स्यलोमावर्ता: सपापकृत्॥ विष
मौविकृतौशृङ्गौयस्यसत्वसनाशन:
। आवर्त: पृष्ठतोयस्यस्वामिनम्
भिविन्दति॥ पश्चार्द्धेयस्यवावर्त
स्तौस्थाव्यौभयकारकौ। वर्णनेत्र
पदादीनांवैकृतावननाशन: ॥ गा
र्ग्य:। दोषवन्मृगजातीनांविजा
तीनामथापिवा। दर्शनात्स्पर्शना
च्चैवगन्धादानाच्चपोषणात्॥ भवे
युर्विपद: सर्वास्तथाचैवाद्यपोष
णात्॥ शक्रोपि। हरिणपोषणतो
धरिणीभुजांनहिभवेन्मरुदुग्रवपीड
नम्। नपविवह्निरुजारिपुजंभयंत
दवतंहरिणं शुभिनंनृप:॥ इतिमृग
परीक्षा युक्तिकल्पतरौ॥ चतुर्विध
पुरुषेषुपुरुषविशेषे॥ तस्यलक्षणं
यथा। वदंतिमधुरवाणींदीर्घनेत्रो
ऽतिभीरुश्चपलमतिसुदेह: शीघ्रवे
गोमृगोयम्॥ शशकेपद्मिनीतुष्टा
मृगेतुष्टाचचित्रिणी। वृषभेशङ्खिनी
तुष्टाहयेतुष्टाचहस्तिनी॥ पद्मिनी
शशयोर्योनिमेढ्रकौचतुरङ्गुलौ।
चित्रिणीमृगयोर्योनिमेढ्रकौचतथा
विधौ॥ इ० रतिमञ्जरी॥

मृगगामिनी । स्त्री० विडङ्गे ॥ मृगस्येव गमनशीलत्वात् ॥
मृगघर्मजम् । न० जवादिनामगन्धद्रव्ये ॥ चि० मृगघर्मजाते ॥
मृगचटक: । पुं० श्येनपक्षिणि ॥
मृगचेष्टितम् । न० मृगेङ्गिते ॥ तथा । सीमागतानन्यमृगाञ्जन्तः स्थितान्त्रजन्तीयसमापतन्तः । सम्प्रत्ययोत्थभयानिदोषाः कुर्वन्ति शून्यं परितोक्ष्यमन्ताः । दोषाः भयं कुर्वन्तिआविष्यन्तीतिसर्वेषान्त्वयोबोध्यः ॥ तेयाव्यसन्तैरनुबाध्यमानाभयायरोधायभवन्तिवन्ध्याः । त्राव्यामपिप्रत्यनुबाधितास्ते बन्दिग्रहायैवमृगाभवन्ति ॥ वन्यैसत्त्वैर्द्वारसंस्थे पुरस्तरोधोबाच्यःसंप्रविष्टे विनाशः । मृतैर्मृत्यु: स्यादयं संस्थितेचयोहंयातिवन्यनंसंप्रदिष्टम् ॥
मृगजहु: पुं० मृगापत्ये ॥
मृगजालिका । स्त्री० वागुरायाम् ॥
मृगजीवन: । पुं० व्याधे ॥ मृगा: जीवनमस्य ॥
मृगया । स्त्री० अपहृतद्रव्यान्वेषणे ॥ मृग० । स्यासेतियुच् ॥
मृगतृट् । स्त्री० मृगतृष्णायाम् ॥
मृगतृषा । स्त्री० मरीचिकायाम् ॥ मृगाणांतृषाअस्त्यस्याम् । अर्शआद्यच् । टाप् ॥
मृगतृष्णा । स्त्री० मरीचिकायाम् ॥ ग्रीष्मे मरुदेशेसिकतासूर्यरश्मयः प्रतिफलितास्ताञ्जलबुद्ध्यानेतुं मृगाधावन्तितेन जलमितिबुद्धिविषयास्ताःमृगतृष्णाअस्त्यस्याम् अर्शआद्यच् । टाप् ॥
मृगतृष्णिका । स्त्री० मृगतृष्णायाम् ॥ मृगतृष्णैव । स्वार्थेकन् ॥ रे चित्तचिन्तयचरं चरणौमुरारेः पारंगमिष्यसियतोभवसागरस्य । पुत्राः कलत्रमितरेसुहृदःसहायाः सर्वंविलोकयसखे मृगतृष्णिकाभम् ॥
मृगदंशक: । पुं० कुक्कुरे ॥ मृगान्दशति । दंशदशने । कर्मण्यण् । कः ॥
मृगधूर्त्तक: । पुं० गोमायौ । शृगाले ॥ मृगेषुधूर्त्तइव । संज्ञायां कन् ॥
मृगनाभि: । पुं० कस्तूर्याम् ॥ मृगस्य नाभिः ॥
मृगनाभजा । स्त्री० कस्तूर्याम् ॥
मृगनेत्रा । स्त्री० रात्रिविशेषे ॥ त्वयापुत्रकनाधीतंमृगनेत्रासुरात्रिषु-तेनत्वं विदुषांमध्ये पङ्के गौरिवसीदसि ॥ मृगोनक्षत्रविशेषोनेताय स्याः । नेतुर्नक्षत्रे ऽब्वक्तव्यः ॥ योषित्प्रभेदे । मृगलोचनायाम् ॥ मृगस्यनेत्रे इवनेत्रे चञ्चले यस्याः ॥
मृगपति: । पुं० मृगेन्द्रे । सिंहे ॥
मृगपिप्लु: । पुं० पत्तजे । चन्द्रे । हि

शाखी ॥
मृगप्रियम् । न० जलतृणे ॥
मृगवधाजीव : । पुं० व्याधे ॥ मृगवध आजीवोऽस्य ॥ मृगवधेनाजीवति वा । जीव० । इगुपधेति कः ॥
मृगबन्धनी । स्त्री० मृगबन्धनार्थं जालविशेषे । श्वावल्० इ० पर्वत भा० ॥ वागुरायाम् ॥ मृगो बध्यतेऽनया । बन्धबन्धने । करणे ल्युट् । ङीप् ।
मृगभक्ष्या । स्त्री० जटामांस्याम् ॥
मृगमदः पुं० कस्तूर्याम् ॥ मृगस्य मदः ॥
मृगमदवासा । स्त्री० कस्तूरीमल्लिकायाम् ॥
मृगमातृकः । पुं० मृगविशेषे ॥ स्वल्पः पृथुरोमकः शरभो मृगमातृकः । गुणैः शशेनसदृशोगदितो मृगमातृकः ॥
मृगया स्त्री० आखेटने । मृगव्ये । पापर्द्धौ । आखेटे । खेटे । हेडा० इ० भा० ॥ अवलम्ब्य...नीडद्रुमपीडिन : खगान् । अनवद्यतृणार्दिनो मृगान्मृगयाघायनभूमृतां...ताम् ॥ इति श्रीहर्षः ॥ मृग्यन्ते मृगा अस्याम् । मृग० । चु० अन्त : । परिचर्य्यापरिसर्य्यामृगयाऽटाट्यानामुपसङ्ख्यानमितिसाधु : ॥
मृगयुः । पुं० व्याधे । लुब्धके । हेशिरा० इ० भा० प्र० । मांसविक्रयार्थं मृगादिपशुहन्तरि ॥ मृगान् बधार्थं याति । या० । मृगय्वादिश्वात्कु : ॥ गोमायौ । शृगाले ॥ परमेष्ठिनि ॥
मृगरसा । स्त्री० सहदेव्याम् ॥
मृगराट् । पुं० सिंहे । मृगेषु राजते । राज्० । क्विप् ॥
मृगराजः पुं० सिंहे ॥ मृगाणां राजा । राजाहः सखिभ्यष्टच् ॥
मृगराटिका । स्त्री० जीवन्त्याम् ॥
मृगरिपुः । पुं० सिंहे ॥ मृगाणां रिपुः ॥
मृगरोमजम् । न० राङ्कवे । मृगरोमजे वस्त्रे ॥
मृगलाञ्छनः । पुं० चन्द्रे । शशिनि ॥ मृगो लाञ्छनं यस्य ॥
मृगवल्लभः । पुं० कुन्दुरुतृणे ॥
मृगवाहनः । पुं० वायौ ॥ मृगो वाहनं यस्य ॥
मृगव्ययम् । न० मृगयायाम् ॥ मृगा व्ययन्त्यत्र । व्ययगतौ । अन्येष्वपीति डः ॥
मृगशिरा : । स्त्री० पंचमनक्षत्रे ॥ मृगः शिरोऽस्य ॥
मृगशिरः । न० मृगशीर्षे । पंचमे नक्षत्रे ॥ अत्र जातस्य फलम् । शरासनाभ्यासरतोविनीतः सदानुरक्तो गुणिनां गुणेषु । भक्तानुपक्ष्मभरे

जातिस्त्रियाम् । मृगीणांजङ्घलोल्या नांछागीचौरग्रुणंमय : ॥ कश्यपक न्यायाम् । पुलहभार्यायाम् । हरि णादिमृगाणांमातरि ॥ मध्याहन्ति प्रभेदे । रोमृगी० द्रुतिलक्षणलक्षि ते ॥ यथा । सामृगीलोचना । रा धिकाश्रीपते : ॥ हरिण्याम् ॥ सितोदरेपीतपृष्ठे वराटके ॥

मृगेक्षणा । स्त्री० मृगनेत्रायाम् ॥ मृ गेक्षरी ॥

मृगेन्द्र : । पुं० सिंहे ॥ नाभिषेको नसंस्कार : सिंहस्यक्रियते वने । विक्रमार्जितसत्त्वस्यस्वयमेवमृगेन्द्र ता ॥ मृगाणामिन्द्र : ॥ वर्णवृत्ता न्तरे ॥ पयोधरधारिमृगेन्द्रमवेहि ॥ यथा । वृथाविलपानि ॥ मध्यलघो: पञ्चमात्रापर्याये० ऽ । ऽ० ॥ यात्रा योगान्तरे ॥ लग्ने शुक्र : शशीबन्धौ कर्मस्थानेगुरुर्यदा । मृगेन्द्रयोगो विख्यातोयातु : सर्वार्थसाधक: ॥

मृगेन्द्रचटक : । पुं० श्येने ॥ चटका नांमृगेन्द्र : ॥ राजदन्तादि : ॥

मृगेन्द्रमुखम् । न० अतिजगती १३ छंदोभेदे ॥ भवतिमृगेन्द्रमुखंनजौ जरौग : ॥ यथा । गुरुभुजवीर्यभरं हरिंमदान्धायुधिसमुपेत्यनदानवा जिजीवु : । क्षुधितमृगेन्द्रमुखंमृगा उपेत्यकःसुखलविम्भतिजीवनंस्त्रयो गम् ॥

मृगेन्द्राणी । स्त्री० वासके ॥

मृगेर्वारु : । स्त्री० श्वेतेन्द्रवारुण्या म् । मृगाक्ष्याम् । श्वेतपुष्पायाम् । मरुजायाम् ॥

मृगेष्ट : । पुं० मुद्गरवृक्षे ॥

मृग्य : । त्रि० अन्वेष्ये । मृगितव्ये ॥

मृज : । पुं० वाद्यविशेषे । मर्दले । दारुजे । मार्दल० द्रु० गौ० दे० भा० प्र० ॥

मृजा । स्त्री० मार्जनायाम् । प्रोञ्छना दिनाङ्गनिर्मलीकरणे ॥ मार्जनम् । मृजूशुद्धौ । मृजूशौचालङ्करणयो श्चुरादिर्वा । भिदाद्यङ् ॥

मृज्य : । त्रि० मार्ज्जनीये ॥

मृड : । पुं० शिवे ॥ मृडति । मृडसु खने । मृड्णातिवा । मृडचचात् क्षोदे । इगुपधत्वात्क : ॥

मृडङ्कण : । पुं० बालके ॥ मृडति । मृड० । मृड : कीकच्कङ्कणाविति कङ्कण : प्रत्यय : ॥

मृडा । स्त्री० दुर्गायां ॥

मृडानी । स्त्री० चण्डिकायाम् । अ म्बिकायाम् ॥ मृडस्यस्त्री । इन्द्रव रुणेतिङीषानुकौ ॥

मृडी । स्त्री० दुर्गायाम् ॥

मृडीक : । पुं० मृगे । हरिणे ॥ मृ डति । मृड:कीकच्कङ्कणाविति की कच् ॥

मृणालम् । न० नलदे । उशीरे ॥ पुं०

न० वसे । पद्मनाले ॥ मृणालंशीतलंवृष्यंपित्तदाहास्रजिद्गुरु । दुर्जरंस्वादुपाकञ्चस्तन्यानलकफप्रदम् ॥ सङ्ग्राहिमधुरंरूक्षं शालूकमपितद्गुणम् ॥ बिसाङ्कुराश्चन्द्रकलानुकाराविभाविता: सैस्वरनिम्नुकाभ्याम् । विकीर्णंखण्डीकृतशृङ्गवेराजलैपिबन्तिं लघुटीभवन्ति ॥ मृणयति । मृणहिंसायाम् । तमिविशिबिडिमृणीतिकालन् ॥

मृणालिनी । स्त्री० पद्मिन्याम् ॥ मृणालादिलच् । पुष्कराद्भ्यो देशइतीनि: ॥

मृणाली । स्त्री० बिसे । अब्जादिमूले ॥ अल्पत्वविवक्षायाम्गौरादित्वान्ङीष् । स्वल्पमृणालजातौ ॥

मृत: । त्रि० परासौ । प्राप्तपञ्चत्वे । परेते । प्रेते । संस्थिते । प्रमीते । मरा० भू० भा० ॥ यथा । धर्म: प्रव्रजितस्तप: प्रवसितं सत्यञ्चदूरेगतंपृथ्वीमन्दफलाजना: कपटिनोलौल्ये स्थिताब्राह्मणा: । मर्त्या: स्त्रीवशगा: स्त्रियश्चचपला: नीचा जनाउन्नताहाकष्टंखलुजीवितंकलियुगेधन्यानरायेमृता: ॥ इतिगारुडे ११५ अध्याय: ॥ न० मृत्यौ ॥ याचिते ॥ मृतन्तुयाचितंप्रोक्तमितिमनु: । याचनवृत्तिर्हिमरणमिवदु:खजनकत्वान्मृतमुच्यते ॥

म्रियतेस्म । कृत्प्राणत्यागे । गत्यर्थेतिक्त: ॥ तनिमृङ्भ्यांकिच्चेति तन्वा ॥

मृतकम् । न० मवे ॥ मरणाशौचे ॥ यथा । यदिस्यान्मृतकेसूतिर्स्तके चमृतिस्तथा । शेषेणैवभवेच्छुद्धिरह: शेषेद्विरात्रकम् ॥

मृतकल्प: । त्रि० मृतप्राये ॥ ईषदूनोमृत: । ईषदसमाप्ताविति कल्पप्प्रत्यय: ॥

मृतकान्तक: । पुं० शृगाले ॥

मृतजीव: । पुं० तिलकवृक्षे ॥

मृतमत्त: । पुं० )
मृतमत्तक: । पुं० ) शृगाले ॥

मृतवत्सा । स्त्री० अजीवत्सन्तानायाम् । मृतापत्यायाम् ॥

मृतसञ्जीवनी । स्त्री० मृतजीवनार्थिकायांविद्यायाम् ॥ गोरक्षदुग्धायाम् ॥ मृत: सञ्जीव्यतेऽनया । जीव प्राणधारणे । ल्युट् । ङीप् ॥

मृतस्नात: । त्रि० अपस्नाते । मृतमुद्दिश्यकृतस्नानेजने ॥ मृतेस्नात: । सप्तमीतिसमास: ॥

मृतस्नानम् । न० अपस्नाने । मृतोद्देशेनस्नाने ॥

मृतसमोत्था । पुं० राजर्षिविशेषे ॥

मृतामदम् । न० तुत्थे ॥

मृतालकम् । न० तुवरिकायाम् ॥ मृतमालयति । अलभूषणादौ ।

युक्तयुक्ताविति स्यु, प् ॥ योगवि
शेषे ॥ यथा । रवावनुराधा० सोमे
उत्तराषाढा० कुजे शतभिषा० बुधे
अश्विनी० गुरौ मृगशीर्षम्० भृ
गौ श्लेषा० शनौ हस्तनक्षत्रे मृ
त्युयोगो भवति ॥ लग्नादष्टमभवने
॥ यात्रायोगान्तरे ॥ अन्योन्यञ्च
गाविकर्त्तचैवाकविधास्करौ । मृ
त्युयोगोयमाख्यातो यातुर्मृत्युप्र
दायक: ॥
मृत्युजरे । स्त्री० द्वि०प्रत्यासन्नप्रिया
प्रियया: ॥ यथा । कालकन्येमृ
त्युजरे प्रत्यासन्नप्रियाप्रिये । या
भ्यांजगत्समुच्छिन्नं विधात्रानिर्मि
तंविधौ ॥ जरामृत्योरपिकालादु
त्पन्नत्वात्कन्यासदृशत्वात्कन्यात्व
म् । तेमृत्युजरे कालस्यकन्ये प्र
त्यासन्नप्रकृष्टत्वरसप्रियाप्रियेमत्
न्यौभवत: । प्रियातोप्रियेऽतिशयि
तप्रियेइत्यर्थ: ॥
मृत्युञ्जय: । पुं० कृत्तिवाससि ।
शिवे ॥ मृत्युकन्याजिताशश्वच्छि
वेनगुरुणाममु । नमृत्युनाजि
त: शम्भु: कल्पेकल्पेऽस्तीश्रुतम्
॥ मृत्युंजयति । जिजये । संज्ञा
यांभृतृवृजिधारिसहितपिदम: ।
इतिखच् । मुम् ॥ यात्रायोगान्त
रे ॥ लाभेभौमोगुरुश्छिद्रे षष्ठस्था
नेचभास्कर: । मृत्युञ्जयसमा
ख्योयं सर्वशत्रुनिवर्हण: ॥
मृत्युनाशक: । पुं० पारदे ॥ त्रि०
मरणहर्त्तरि ॥
मृत्युपाश: । पुं० अधर्माज्ञानराग
द्वेषादौ ॥
मृत्युपुष्प: । पुं० इक्षौ ॥
मृत्युफल: । पुं० महाकालफले ॥
मृत्युफली । स्त्री० कदल्याम् ॥
मृत्युभङ्गरक: । पुं० भवकृति ।
प्रेतपटहे । मरणसमयवाद्ये ॥
मृत्युरुज्य: । पुं० रोगे ॥
मृत्युमान् । त्रि० मृते ॥
मृत्युवञ्चन: । पुं० शम्भौ ॥ श्रीफले
॥ द्रोणकाके ॥
मृत्युबीज: । पुं० वंशे ॥
मृत्युसूति: । स्त्री० कर्कट्याम् ।
नागमातायाम् ॥ मृत्यवेसूति: प्रसवो
यस्या: ॥ यथाकर्कटकीगर्भंसाध
तेमृत्युमात्मन: ॥
मृत्सा । स्त्री० प्रशस्तमृदि ॥ प्रशस्तामृ
त् । सस्नौप्रशंसायामितिस: । टा
प् ॥ तुवरिकायाम् । तूअर० इ०
भा० ॥ मृत्साऽस्त्यस्या: चेत्यन
। अर्शआद्यच् । टाप् ॥
मृत्स्ना । स्त्री० प्रशस्तायांमृत्तिकायाम्
। मृत्सायाम् ॥ प्रशस्तामृत् । स
स्नौप्रशंसायामितिस्न: । टाप् ॥
तुवर्याम् । आढक्याम् । अरहर
तूअर० इ० भा० ॥

मृत्०द्र । स्त्री० मृत्तिकायाम् ॥ शौचे मृद्विशेषोयथाविष्णुपुराणे । वल्मीकमूषकोत्खातांमृदमन्तर्जलांतथा । शौचावशिष्टंगेहाच्चनादद्याल्लेपसम्भवाम् ॥ अन्तःप्राण्यवपन्नाञ्चहलोत्खातांचपार्थिव । परित्यजेन्मृदस्त्वेताः सकलाःशौचसाधनइति ॥ अन्तःप्राण्यवयन्मासकीटाम् ॥ मृद्यते० मृद्यतेवा । मृदक्षोदेसम्पदादित्वात्क्विप् । काच्याम् । तुवरिकायाम् ॥

मृदङ्कुरः । पुं० हारीतपक्षिणि ॥

मृदङ्गः । पुं० स्वनाम्नाप्रसिद्धेवाद्ये । मुरजे ॥ अथमृदङ्गादिविवरणम् । मर्दलः खादिरः श्रेष्ठोहीनःस्यादन्यदारुजः । रक्तचन्दनजीवाद्योगभीरध्वनिरुच्चकैः ॥ सार्द्धहस्तप्रमाणन्तुदैर्घ्यमस्यविधीयते । त्रयोदशाङ्गुलंवाममथवाद्वादशाङ्गुलम् ॥ दक्षिणञ्चभवेद्धीनमेकेनाऽर्द्धाङ्गुलेनवा । करणानद्धवदनोमध्येचैवपृथुर्भवेत् ॥ षण्मासीयोभवेद्धस्तस्तच्चर्मकरणंमतम् । मृत्तिकानिर्म्मितश्चैवमृदङ्गः परिकीर्त्तितः ॥ पातयेत्खरलिंवाद्यवादनार्थंस्वमर्द्दले । विभूतिर्गैरिकंभक्तक्लिन्दुकीनचसंयुतम् ॥ यद्वाचिपीटकंदेयंजीविनीसत्त्वमिश्रितम् । सर्वमेकत्र पिष्टंतल्लेपः खरलिरुच्यते ॥ वामास्येपूरिकांक्लृत्वालेपंदद्याच्चदक्षिणे । एवंमर्द्दलकः प्रोक्तः सर्ववाद्योत्तमोमतः ॥ अस्यसंयोगमात्रायसर्ववाद्यञ्चशोभते । एतद्धीजकाष्ठे दलमर्द्धाङ्गुलंविदुः ॥ इति । विशेषः सङ्गीतशास्त्रेद्रष्टव्यः ॥ पटहे ॥ घोषे ॥ वंशे ॥ मृद्यते । मृद० । विडादिभ्यःकिदिन्यङ्गच् ॥ मृत्पक्वमस्येतिवा ॥

मृदङ्गकः । पुं० मृदङ्गे ॥

मृदङ्गफलः । पुं० पनसवृक्षे ॥ मृदङ्गवत्फलान्यस्य ॥

मृदङ्गफलिनी । स्त्री० कोषातक्याम् ।

मृदङ्गी । स्त्री० कोषातक्याम् । श्वेतघोषादृतिगौ०दे०भा० ॥

मृदरः । पुं० विषे ॥ त्रि०विलससति ॥ म्रियतेऽनेन०मृद्नातिवा । मृङ्मृद०वा । कदरादयश्चेति० अरप्रत्ययान्तोनिपातितः ॥ भये ॥

मृदा । स्त्री० मृत्तिकायाम् ॥

मृदाकरः । पुं० वज्रे ॥

मृदितः । त्रि० अभिनष्टे । विनाशिते ॥ निष्पीडिते ॥ चूर्णीकृते ॥ मृद्यतेस्म । मृद० । क्तः । इट् । क्ङितिचेतिनगुणः ॥ घोणे ॥

मृदिनी । स्त्री० मृत्सायाम् ॥

मृदु: । त्रि० कोमले ॥ अतीक्ष्णे ॥ मृदु: सर्व्वत्रबाध्यते ॥ मृद्यते । मृद मर्द्दने । प्रथिम्रदिभ्रस्जामितिकुः सम्प्रसारणं च ॥ मृदुशब्दोमृदुत्वगुणमुक्त्वातद्द्रव्यमभिधत्ते द्रुतिगुणवचनोमृदुशब्दः । तेनस्त्रियांङीषभावे॰मृदु: ॥ न॰ त्रिशेषनक्षत्रादौ ॥ यथा । चित्रे न्दुमित्रपौष्णाश्चमृदुमैत्रं तथाभृगुः । तत्रगीताम्बरक्रीडामित्रकार्यंचशोभनम् ॥ स्त्री॰गृहकन्यायाम् ॥

मृदुकृष्णायसम् । न॰ सीसके ॥

मृदुगमना । स्त्री॰ हंस्याम् ॥ त्रि॰मन्दगमने ॥

मृदुचर्म्मा । पुं॰ भूर्ज्जवृक्षे ।' त्रि॰कोमलत्वग्विशिष्टे ॥

मृदुच्छद:। पुं॰ भूर्जे ।कुक्कुरद्रुमे ॥ श्रोताले ॥ अक्षोटे ॥

मृदुता । स्त्री॰ मृदुत्वे ॥

मृदुताल : पुं॰ श्रीतालवृक्षे ॥

मृदुत्वक् । पुं॰ भूर्जपत्रवृक्षे ॥ मृद्वीत्वगस्य ॥

मृदुत्वच : । पुं॰ मृदुत्वचि ॥ मृद्वीत्वचायस्यस: ॥

मृदुत्वणम् । न॰ सुवर्णे ॥ इतिशब्दचन्द्रिका ॥

मृदुपत्र: । पुं॰ नले॥न॰कोमपलर्णे ॥ त्रि॰कोमलपत्रवति॥ मृदूनिपत्राणियस्यस: ॥

मृदुपत्री । स्त्री॰ घिल्लीशाके ॥

मृदुपर्व्वक: । पुं॰ वेत्रे ॥ त्रि॰ कोमलपर्व्ववति ॥

मृदुपुष्प: । पुं॰ शिरीषवृक्षे ॥ त्रि॰ कोमलकुसुमविशिष्टे ॥ मृदूनिपुष्पाणियस्यस: ॥

मृदुफल: । पुं॰ मधुनारिकेले ॥ त्रि॰ कङ्कते ॥ त्रि॰ कोमलफलवति ॥ मृदूनिफलानियस्यस: ॥

मृदुवस्थ: । पुं॰ सात्त्विकराजसर्व्वालये ॥

मृदुरेचनी । स्त्री॰ मार्कण्डिकायाम् ॥

मृदुल: ।त्रि॰ कोमले ॥ मृदुर्गुणोस्यास्ति । सिध्मादिभ्यश्चेतिलच् ॥ न॰ जले ॥

मृदुलोमक: । पुं॰ शशके ॥ त्रि॰कोमलरोमविशिष्टे ॥

मृदूत्पलम् । न॰ नीलपद्मे ॥

मृद्वङ्गम् । न॰ वङ्गे ॥ कोमलावयवे ॥ त्रि॰तद्वति । मृदून्यङ्गानियस्य ॥ कर्म्मधारयोवा ॥

मृद्वी । स्त्री॰ कपिलद्राक्षायां ॥ कोमलाङ्ग्याम् ॥ मृदुशब्दोमृदुत्वगुणमुक्त्वा॰मृदुत्वगुणयुक्तं द्रव्यमभिधत्ते द्रुतिगुणवचनत्वे न॰वोतोगुणवचनादितिपाक्षिकोङीष् ॥

मृद्वीका । स्त्री॰ गोस्तन्याम् । द्राक्षायाम् । मुनक्का॰ इ॰ भा॰ ॥ मृद्नाति । मृदु॰ । अलीकादयश्चेति-

साधुः ॥ कपिलद्राक्षायाम् ॥

मृधम् । न० युद्धे ॥ अर्द्दनम् । मृधु हिंसायाम् । बाहुलकात्० भावे० घञर्थेबाकः ।

मृन्मयः । त्रि० मृदोविकारे ॥ मयट् ॥ स्त्री० मृन्मयी ॥

मृन्मलः । पुं० अश्मनि । पाषाणे ॥

मृषा । अ० वितथे । मिथ्या झूठ० इ० भा० ॥ मृष्यते । मृषुसहने । काप्रत्ययः ॥

मृषाध्यायी । पुं० वके ॥

मृषार्थकम् । न० आहते । अत्यन्तासम्भवार्थवाक्ये ॥ यथा । एषवन्ध्यासुतोयातिखपुष्पकृतशेखरः ॥ कूर्मक्षीरचयेस्नातः शशशृङ्गधनुर्द्धरः ॥ इ० । मृषाऽर्थोयस्यतत् । कप् ।

मृषालकः । पुं० आम्रवृक्षे ॥

मृषावादः । पुं० मिथ्योदिते । मिथ्यावाक्ये । टङ्कयाम् ॥

मृषावादी । त्रि० मिथ्यावादिनि । मृषोद्ये । मृषावादोस्यास्ति । इनिः ॥ मिथ्याभियोक्तरि ।

मृषोद्यः । त्रि० मिथ्यावादिनि ॥ राजसूयसूयं मृषोद्य ... मृषोपपातकेः ... ॥

मृष्टः । ... संयुतम् ... शोधिते ॥ मज्वनीसत्त्वमिश्री । क्तः । न०

मरिचे ॥

मृष्टिः । स्त्री० सम्मार्जे : संस्कारविशेषे ।

मृष्टेरुकः । पुं० वदान्ये । दानशौण्डे ॥ मिष्टाशिनि ॥ अतिथिद्विषि ॥

मेकः । पुं० अजे । छागे ॥

मेकलः । पुं० ऋष्यन्तरे ॥ गिरिविशेषे ॥

मेकलकन्यका । स्त्री० नर्मदाभिसरिति । रेवायाम् ॥ मेकलस्यर्षेर्द्रेर्वाकन्यका ॥

मेकलाद्रिजा स्त्री० सोमोद्भवायाम् । रेवायाम् ॥ मेकलाद्रेजाता । जनी० । डः ॥

मेखकम् । न० यज्ञीयपात्रविशेषे ॥

मेखलः । पुं० मेकलपर्वते ॥

मेखलकन्यका । स्त्री० रेवायाम् ॥

मेखला । स्त्री० खड्गबन्धे । खड्गादेस्तम्भादिनिर्मितेकटिबन्धने ॥ युद्धे हस्तात्पतननिवारणाय मणिबन्धे प्रक्षिप्यमाणे चर्मादौ ॥ स्त्रीकट्याभरणे । काञ्च्याम् ॥ रशनायाम् ॥ केचित्तु० एकयष्टिर्भवेत्काञ्चीमेखलात्वष्टयष्टिका । रशनाषोडशज्ञेयाकलापः पञ्चविंशकः ॥ इतिपठन्ति० इहत्वभेदात्पर्यायता ॥ स्त्रीकट्यांबद्धग्रन्थने ॥ ओणिस्थाने ॥ शैलनितम्बे ॥ उपनयनकाले

धारणीयमुञ्जनिर्मितसूत्रत्रये ॥ य-
था । मौञ्जी त्रिवृत्समा श्लक्ष्णा का-
र्या विप्रस्य मेखला । क्षत्रियस्य तु मौ-
र्वी ज्या वैश्यस्य शणतान्तवी ॥ मुञ्जा-
लाभे तु कर्त्तव्याः कुशाश्मान्तकब-
ल्वजैः । त्रिवृता ग्रन्थिनैकेन त्रिभिः
पञ्चभिरेव वा ॥ इ० मनुः ॥ होम-
कुण्डोपरि मृद्घटितवेष्टनविशेषे ॥
यथोक्तं वशिष्ठपञ्चरात्रे । यावान् कु-
ण्डस्य विस्तारः खननं तावदिष्य-
ते । हस्ते के मेखलास्तिस्रो वेदाग्नि-
नयनाङ्गुलाः ॥ कुण्डे द्विहस्ते ता-
स्त्रयो रसवेदगुणाङ्गुलाः । चतुर्ह-
स्ते तु कुण्डे ताः सुतर्कयुगाङ्गुलाः ॥
मेखला ब्रह्मचारि मेखलावत् कुण्ड-
वेष्टिताम् मृद्घटिताः तास्तु खातदेशा-
द्बाह्ये एकाङ्गुलिरूपं कण्ठं परित्यज्यो-
च्छ्रायेण विस्तारेण चेत्यादिक्रमेण वे-
दाद्यङ्गुलाः एतद्विपरीतास्तन्त्रा-
न्तरोक्ताव्यवहारविरुद्धाः ॥ पिङ्ग-
लामतेऽपि । खातादेकाङ्गुलं त्यक्त्वा
मेखलानां विधिर्भवेदिति ॥ मखं ग
िलति । ला० । आतइतिकः ।
पृषोदरादिः ॥ मां लक्ष्मीम् ईखति
०माईखतिवा । माशब्दोनिषेधेईख-
गतौ । बाहुलकात् कलच् ॥ य
द्वा । माईखलति । खलसञ्चयेसि
ञ्चनेच । मूलविभुजादित्वात् कः ।
अणितु०वृद्धिः स्यात् ॥ नर्मदा-

याम् ॥ अग्निपत्न्याम् ॥
मेखलिकः । पुं० मेखलिनि । मेख-
लास्यास्ति । व्रीह्यादित्वाट्ठन् ॥
मेखली । पुं० मेखलावति । मेखलि-
कि । मेखलास्यास्ति । व्रीह्यादित्वा-
दिनिः ॥
मेघः । न० अभ्रे । वारिवाहे । घने ।
जलदे ॥ मेघास्त्रिविधास्तत्र वह्नि-
जा धूमयोनयः । निश्वासजास्तु जी-
मूतास्ते ज्ञेया जीवरूपिणः ॥ पक्ष-
जास्तु घनाघोराः पुष्करावर्त्तकाद-
यः । इति विशेषउक्तः शब्दार्णवे-
॥ मेहति सिञ्चति । मिह सेचने ।
अच् । न्यङ्क्वादित्वात् कुत्वम् ॥
मुस्तायाम् ॥ राक्षसे ॥ षड्रागान्त-
र्गतरागविशेषे ॥ यथा । भैरवोऽथव-
सन्तश्च नटोनारायणस्तथा । श्रीरा-
गो मेघरागश्च षडेते पुरुषाह्वयाः ॥
मेघकफः । पुं० करकायाम् ॥
मेघकालः । पुं० वर्षर्त्तौ ॥
मेघचिन्तकः । पुं० चातकपक्षिणि ॥
मेघङ्करः । पुं० मेघजनने ॥ मेघान्क-
रोति । मेघर्त्तिभयेषु कृञः खच्
प्रत्ययः । अरुर्द्विषदिति मुम् ॥
मेघजः । त्रि० मेघभववस्तुनि ॥
मेघजालम् । न० कालिकायाम् । मे
घावली ॥
मेघजीवनः । पुं० चातके ॥ मेघो जी
वनमस्य ॥

मेघज्योति:। पुं० इरम्मदे। वज्राग्नौ ॥ मेघस्यज्योति:॥ अन्योन्यसङ्घट्टनेनमेघाग्नि: तस्यतस्मादीयोज्योतिरग्नि: पततिस:॥

मेघडम्बर:। पुं० मेघगर्जने ॥ मेघस्यडम्बर:॥

मेघतिमिरम्। न० मेघाच्छन्नदिने ॥

मेघदीप:। पुं० विद्युति ॥

मेघध्वनि:। पुं० गर्ज्जिते। मेघनिर्घोषे ॥

मेघनाद:। पुं० वरुणे॥ रावणात्मजे। इन्द्रजिति ॥ मेघस्यनादइवनादोयस्य॥ मेघशब्दे॥ पलाशवृक्षे। तण्डुलीयशाके॥ इतिराजनिर्घण्ट:॥ मेघस्यनाद:॥

मेघनादजित्। पुं० रामानुजे। लक्ष्मणे॥ मेघनादमजैषीत्। जि०। सत्सूद्विषेतिक्विप्। तुक्॥

मेघनादानुलासक:। पुं० मयूरे॥

मेघनादानुलासी। पुं० मयूरे॥ मेघनादेनअनुलसति० तच्छील:। लसश्लेषणक्रीडनयो:। सुप्यजातावितिणिनि:॥

मेघनामा। पुं० मुस्तके॥ मेघनामानिनामास्य॥ आदिलघोपञ्चमात्रके०।ऽऽ॥

मेघनायक:। पुं० आवर्त्तादौ॥ यथा। त्रियुतंशाकवर्षं तुचतुर्भि:शोधितेक्रमात्। आवर्त्तोविदिसंवर्त्तःपुष्करद्रोणमम्बुदम्॥ फलंयथा। आवर्त्तोनिर्ज्जलोमेघ:संवर्त्तश्चबहूदक:। पुष्करोदुष्करजलोद्रोण: सस्यप्रपूरकइति॥

मेघनिर्घोष:। पुं० स्तनिते। गर्ज्जिते॥ मेघस्यनिर्घोष:॥

मेघपर्याय:। पुं० आदिलघोपञ्चमात्रके०।ऽऽ॥ मुस्तके॥ मेघोमेघवाचक: शब्द: पर्यायोऽस्य॥

मेघपुष्पम्। न० पिण्डाभ्रे। वर्षोपले॥ अम्बुनि॥ नदीजले॥ पुं० इन्द्रस्याश्वे॥ कृष्णस्यघोटके॥ मेघस्यपुष्पमिव॥

मेघप्रसव:। पुं० जले॥

मेघभव:। त्रि० मेघोत्पन्नवस्तुनि॥

मेघभूति:। पुं० वज्रे॥

मेघमाल:। पुं० प्लक्षद्वीपस्थेगिरिविशेषे॥ रमागर्भजातकल्किदेवपुत्रे॥

मेघमाला। स्त्री० कादम्बिन्याम्। मेघानांमाला॥

मेघयोनि:। पुं० धूमे॥

मेघराग:। पुं० रागविशेषे॥ मेघसंज्ञकोराग:॥

मेघवर्णा। स्त्री० नीलीवृक्षे॥ त्रि० घनसमानवर्णवति॥

मेघवर्त्म। न० नभसि। गगने॥

मेघवह्नि:। पुं० वज्राग्नौ। इरम्मदे॥

